काश्यपः । अवैमि तेऽस्यां सौदर्यस्नेहम् । इयं तावद्दक्षिणेन ।

शकुन्तला । उपसृत्य । लतामालिङ्ग्य । सस्नेहगद्गदम् । वणज्जोसिणि । चूदसंगदावि पश्चालिङ्ग मं इदोगदाहिं साहाबाहाहिं । अज्जप्पहुदि दूरवत्तिणी खु दे भविस्सं ।

काश्यपः । संकल्पितं प्रथममेव मया त्वदर्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वम् ।
चूतेन संश्रितवती नवमालिकेय-
मस्यामहं त्वयि च संप्रति वीतचिन्तः ॥ १३ ॥

शकुन्तला । सख्यावुपेत्य । एसा दोण्हं पि हत्थे णिक्खेवो ।

सख्यौ । अअं जणो दाणिं कस्स हत्थे समप्पितो । बाष्पं विसृजतः ।

काश्यपः । अनसूये । अलं रुदित्वा । ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ।

सर्वे परिक्रामन्ति ।

शकुन्तला । विलोक्य । ताद । एसा उडजपज्जन्तचारिणी गब्भमन्थरा मिअवहू जदा अणघप्पसवा होइ तदा मे कंपि पिअणिवेदइत्तअं विसज्जइस्सध ।

काश्यपः । नेदं विस्मरिष्यामः ।

---

१२·४-६ वनज्योत्स्ने । चूतसंगतापि प्रत्यालिङ्ग मामितोगताभिः शाखाबाहाभिः । अद्यप्रभृति दूरवर्तिनी खलु ते भविष्यामि ।

१३·१ एषा द्वयोरपि हस्ते निक्षेपः ।

१३·२ अयं जन इदानीं कस्य हस्ते समर्पितः ।

१३·७-९ तात । एषा उटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदानघप्रसवा भवति तदा मे कमपि प्रियनिवेदयितृकं विसर्जयिष्यथ ।

**शकुन्तला ।** गतिभङ्गं रूपयित्वा । अम्मो । को णु क्खु एसो मा अदेक्खन्तो विअ पुणो पुणोवि णिवसणे मे सज्जति ।

**काश्यपः ।** वत्से ।

यस्य त्वया व्रणविरोहणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १४ ॥

**शकुन्तला ।** दृष्ट्वा । वच्छ । किं मं सहवासपरिच्चाइणिं अण्णेससि । अचिरप्पसूदोवरताए जणणीए विणा वड्ढिदो एव्व । दाणिं पि मए विरहिदं तुमं तादो चिन्तइस्सदि । ता णिअत्तसु वच्छ । णिअत्तसु । रुदती प्रस्थिता ।

**काश्यपः ।** वत्से ।

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया विरतानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १५ ॥

**शार्ङ्गरवः ।** भगवन् । ओदकान्तात्स्निग्धो जनोऽनुगन्तव्य इति श्रूयते । तदिदं सरस्तीरम् । अत्र संदिश्य प्रतिगन्तुमर्हसि ।

**काश्यपः ।** तेन हीमां क्षीरवृक्षच्छायामाश्रयामः ।

सर्वे परिक्रम्य स्थिताः ।

---

१३·११-१२ अम्मो । को नु खल्वेष मामप्रेक्षमाण इव पुनः पुनरपि निवसने मे सज्जते ।

१४·१-४ वत्स । किं मां सहवासपरित्यागिनीमन्वेष्यसि । अचिरप्रसूतोपरतया जनन्या विना वर्धित एव । इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति । तन्निवर्तस्व वत्स । निवर्तस्व ।

**काश्यपः ।** आत्मगतम् । **किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम् ।** चिन्तयति ।

**अनसूया । सहि । ण सो अस्समपदे अत्थि कोवि चित्तवन्तो जो तए विरहअन्तीए ण उस्सुओ किदो अज्ज । पेक्ख दाव ।**

**पदमिणिपत्तन्तरिदं वाहरिदो णाणुवाहरेदि पिअं ।**
**मुहउव्वूढमुणालो तइ दिट्ठिं देइ चकाओ ॥ १६ ॥**

**शकुन्तला ।** जनान्तिकम् । **हला पेक्ख । नलिनीपत्तन्तरिदंपि सहअरं अदेक्खन्ती आदुरं चक्कवाई आरडइ – दुक्करं खु अहं करेमित्ति ।**

**प्रियंवदा । सहि । मा एव्वं मन्तेहि ।**

**एसावि पिएण विणा गमेइ रअणिं विसूरणादीहं ।**
**गरुअं पि विरहदुक्खं आसाबन्धः सहावेदि ॥ १७ ॥**

**काश्यपः । शार्ङ्गरव । इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः ।**

**शार्ङ्गरवः । आज्ञापयतु भगवान् ।**

---

१५.७-८ सखि । न स आश्रमपदेऽस्ति कोऽपि चित्तवान्यस्त्वया विरह्यमाणया नोत्सुकः कृतोऽद्य । पश्य तावत् ।

१६ पद्मिनीपत्रान्तरितां व्याहृतो नानुव्याहरति प्रियाम् ।
मुखोद्गूढमृणालस्त्वयि दृष्टिं ददाति चक्रवाकः ॥

१६.१-३ हला प्रेक्षस्व । नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारटति – दुष्करमहं करोमीति ।

१६.४ सखि । मैवं मन्त्रयस्व ।

१७ एषापि प्रियेण विना गमयति रजनीं विसूरणादीर्घाम् ।
गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥

**काश्यपः ।** अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥१८॥

**शार्ङ्गरवः ।** गृहीतः संदेशः ।

**काश्यपः ।** शकुन्तलां प्रति । वत्से । त्वमिदानीमनुशासनीयासि । पश्य । वनौकसोऽपि सन्तो लौकिकज्ञा वयम् ।

**शार्ङ्गरवः ।** न खलु धीमतां कश्चिदविषयो नाम ।

**काश्यपः ।** सा त्वमितः पतिकुलं प्राप्य –

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥१९॥

कथं वा गौतमी मन्यते ।

**गौतमी ।** एत्तिओ क्खु वहूजणस्स उवदेसो । शकुन्तलां प्रति । जादे । एदं खु सव्वं ओधारेहि ।

**काश्यपः ।** वत्से । एहि । परिष्वजस्व मां सखीजनं च ।

**शकुन्तला ।** ताद । इदो ज्जेव किं पिअसहीओ णिवत्तिस्सन्ति ।

**काश्यपः ।** वत्से । इमे अपि प्रदेये । तन्न युक्तमनयोस्तत्रागन्तुम् । त्वया सह गौतमी यास्यति ।

---

१९.२-३ एतावान्खलु वधूजनस्योपदेशः । .... । जाते । एतत्खलु सर्वमवधारय ।

१९.५ तात । इत एव किं प्रियसख्यौ निवर्तिष्येते ।

**शकुन्तला ।** पितरमाश्लिष्य । **कधं दाणिं तादस्स अङ्कादो परिब्भट्ठा मलयतडुम्मूलिदा चन्दणलदेव देसन्तरे पाणाइं धारइस्सं ।** रोदिति ।

**काश्यपः । वत्से । किमेवं कातरासि ।**

**अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे**
**विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।**
**तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं**
**मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ २० ॥**

**शकुन्तला ।** पितुः पादयोः पतति ।

**काश्यपः । यदिच्छामि ते तदस्तु ।**

**शकुन्तला ।** सख्यावुपेत्य । **हला । दुवेपि मं समं एव्व परिस्सअध ।**

**सख्यौ ।** तथा कृत्वा । **सहि । जदि णाम स राआ पच्चभिण्णाणमन्थरो भवे तदा से इमं अत्तणामहेयङ्किदं अङ्गुलीअअं दंसेहि ।** अङ्गुलीयकं दत्तः ।

**शकुन्तला । इमिणा संदेहेण वो आकम्पिदम्हि ।**

**उभे । मा भाआहि । सिणेहो वाममासङ्कति ।**

---

१९.८-१० कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतटोन्मूलिता चन्दनलतेव देशान्तरे धारयिष्यामि ।

२०.३ हला । द्वे अपि मां सममेव परिष्वजेथाम् ।

२०.४-५ सखि । यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्तदा तस्येदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय ।

२०.७ अनेन संदेहेन वामाकम्पितास्मि ।

२०.८ मा बिभीहि । स्नेहो वाममाशङ्कति ।

**शार्ङ्गरवः ।** ऊर्ध्वं विलोक्य । **युगान्तरमधिरूढः सविता । त्वरतां भवती ।**

**शकुन्तला ।** भूयः पितरमाश्लिष्य । सगद्गदम् । **ताद । कदा णु क्खु भूओ तवोवणं पेक्खिस्सं ।**

**काश्यपः । वत्से । श्रूयताम् ।**

**भूत्वा चिराय चतुरन्तमहीसपत्नी**
**दौष्यन्तिमप्रतिरथं तनयं प्रसूय ।**
**तस्मिन्निवेशितधुरेण सहैव भर्त्रा**
**शान्त्यै करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ २१ ॥**

**गौतमी । जादे । परिहीअदि दे गमणवेला । ता णिअत्तावेहि पिदरं ।** काश्यपं प्रति । **अध वा । चिरेणावि एसा एव्वं मन्तइस्सदि । ता णिवत्तदु भवं ।**

**काश्यपः । वत्से । उपरुध्यते मे तपोनुष्ठानम् ।**

**शकुन्तला ।** पुनः पितरमाश्लिष्य । **तवचरणपीडिदं तादसरीरं । ता मा अदिमेत्तं मम किदे उक्कण्ठिदुं ।**

**काश्यपः ।** सनिःश्वासम् ।

**शममेष्यति मे शोकः कथं नु वत्से त्वया रचितपूर्वम् ।**
**उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ २२ ॥**

**गच्छ । शिवास्ते पन्थानः ।**

निष्क्रान्ता शकुन्तला सहयायिनश्च ।

---

२०.११-१२ तात । कदा नु खलु भूयस्तपोवनं प्रेक्षिष्ये ।

२१.१-३ जाते । परिहीयते ते गमनवेला । तन्निवर्तय पितरम् । ..... । अथ वा । चिरेणाप्येषा एवं मन्त्रयिष्यति । तन्निवर्ततां भवान् ।

२१.५-६ तपश्चरणपीडितं तातशरीरम् । तन्मातिमात्रं मम कृत उत्कण्ठितुम् ।

**सख्यौ।** चिरं विलोक्य। हद्धि। अन्तरिदा सउन्दला वणराईए।

**काश्यपः।** सनिःश्वासम्। अनसूये। गतवती वां सहधर्मचारिणी। निगृह्य शोकमनुगच्छतं मां प्रस्थितम्।

**उभे।** ताद। सउन्दलाविरहिदं सुण्णं विअ तवोवणं पविसामो।

**काश्यपः।** स्नेहप्रवृत्तिरेवंदर्शिनी। सविमर्शं परिक्रम्य। हन्त भोः। शकुन्तलां पतिगृहं विसृज्य लब्धमिदानीं स्वास्थ्यम्। कुतः—

अर्थो हि कन्या परकीय एव
तामद्य संप्रेष्य परिग्रहीतुः।
जातोऽस्मि सद्यो विशदान्तरात्मा
चिरस्य निक्षेपमिवार्पयित्वा॥ २३॥

निष्क्रान्ताः सर्वे।

॥ इति चतुर्थोऽङ्कः॥

---

२२·३ हा धिक्। अन्तरिता शकुन्तला वनराज्या।
२२·६ तात। शकुन्तलाविरहितं शून्यमिव तपोवनं प्रविशावः।

# ॥ अथ पञ्चमोऽङ्कः ॥

ततः प्रविशति कञ्चुकी ।

**कञ्चुकी ।** आत्मानं विलोक्य । निःश्वस्य । अहो बत कीदृशीं
३ वयोवस्थां प्राप्तोऽस्मि ।

आचार इत्यधिकृतेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
कालेन सैव परिहीननियोगशक्ते-
र्गन्तुं ममेयमवलम्बनवस्तु जाता ॥ १ ॥

यावदभ्यन्तरगताय देवायानुष्ठेयमकालक्षेपार्हं निवेदयामि । द्वे पदे गत्वा । किं पुनस्तत् । संस्मृत्य । आं । कण्वशिष्यास्तपोधना
३ देवं द्रष्टुमिच्छन्ति । भोश्चित्रमिदम् ।

क्षणात्प्रबोधमायाति लङ्घ्यते तमसा पुनः ।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥ २ ॥

परिक्रम्य । आकाशे । मौद्गल्य । धर्मकार्यमनतिपात्यम् । तद्देवस्य तदावेदितुमिच्छामि । किं ब्रवीषि । नन्विदानीमेव धर्मासना-
३ दुत्थितः पुनः पुनरुपरुध्यते देव इति । नन्वीदृशो लोकतन्त्राधि-
कारः । पश्य ।

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिंदिवं गन्धवहः प्रयाति ।
अवेक्ष्य दाह्यं न शमोऽस्ति वह्नेः
षष्ठांशवृत्तेरपि धर्म एषः ॥ ३ ॥

किं ब्रवीषि । तेन संगीतकशालासंगतं मण्डपं गच्छ — अनुष्ठीयतां नियोग इति । यावत्तत्र गच्छामि । परिक्रम्यावलोक्य च ।

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवते शान्तमना विविक्तम् ।
यूथानि संचार्य रविप्रतप्तः
शीतं दिवा स्थानमिव द्विपेन्द्रः ॥ ४ ॥

ततः प्रविशत्यासनस्थः परिमितपरिवारो राजा विदूषकश्च ।

**विदूषकः** । कर्णं दत्त्वा । भोः । संगीदसालन्तेण अवधाणं देहि । तालगतिविसुद्धाए क्खु वीणाए सरसञ्जोओ सुणीअदि । जाणे तत्तभोदी हंसवदिआ वण्णपरिचअं करेदित्ति ।

**राजा** । आकर्णयन् । माधव्य । तूष्णीं भव यावदाकर्णयामि ।

**कञ्चुकी** । अये व्यासक्तचित्तो देवः । अवसरं तावत्प्रतिपालयामि । विलोकयन्स्थितः ।

**नेपथ्ये** । गीयते –

अहिणवमहुलोलुओ तुमं
तह परिचुम्बिअ चूअमञ्जरिं ।
कमलवसदिमेत्तणिव्वुदो
महुअर विम्हरिओसि णं कहं ॥ ५ ॥

**राजा** । अहो रागपरिवाहिणी गीतिः ।

---

४.२-४ भोः । संगीतशालान्तेनावधानं देहि । तालगतिविशुद्धायाः खलु वीणायाः स्वरसंयोगः श्रूयते । जाने तत्रभवती हंसपदिका वर्णपरिचयं करोतीति ।

५ अभिनवमधुलोलुपस्त्वं
तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो
मधुकर विस्मृतोऽस्येनां कथम् ॥

**विदूषकः ।** किं दाव से गीदीए गिहिदो भवदा अक्खरत्थो ।

**राजा ।** स्मितं कृत्वा । सकृत्कृतप्रणयोऽयं जनः । तदहमस्या देवीं वसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि । सखे माधव्य । मद्वचनादुच्यतां हंसपदिका – निपुणमुपालब्धाः स्म इति ।

**विदूषकः ।** जं भवं आणवेदि । उत्थाय । भो वअस्स । गहीदस्स ताए परकीएहिं हत्थेहिं सिहण्डए अच्छराए वीदराअस्स विअ णत्थि मे मोक्खो ।

**राजा ।** वयस्य । नागरिकवृत्त्या संज्ञापयैनाम् ।

**विदूषकः ।** का गदी । निष्क्रान्तः ।

**राजा ।** आत्मगतम् । किं नु खलु गीतमेवंविधार्थमाकर्ण्येष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि । अथ वा ।

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दा-
न्पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ ६ ॥

**कञ्चुकी ।** उपसृत्य । प्रणिपत्य । जयतु जयतु देवः । एते खलु हिमगिरेरुपत्यकारण्यवासिनः काश्यपसंदेशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः । श्रुत्वा देवः प्रमाणम् ।

**राजा ।** किं काश्यपसंदेशहारिणः ।

**कञ्चुकी ।** अथ किम् ।

---

५.२ किं तावत्तस्या गीतेर्गृहीतो भवताक्षरार्थः ।

५.६-८ यद्भवानाज्ञापयति । .... । भो वयस्य । गृहीतस्य तया परकीयैर्हस्तैः शिखण्डके अप्सरसा वीतरागस्येव नास्ति मे मोक्षः ।

५.१० का गतिः ।

**राजा ।** तेन हि विज्ञाप्यतां मद्वचनादुपाध्यायः सोमरातः—अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हसि । अहमप्येनांस्तपस्विदर्शनोचिते देशे प्रतिपालयामि—इति ।

**कञ्चुकी ।** यदाज्ञापयति देवः । निष्क्रान्तः ।

**राजा ।** उत्थाय । वेत्रवति । अग्निशरणमार्गमादेशय ।

**प्रतीहारी ।** इदो इदो देवो ।

सर्वे परिक्रामन्ति ।

**राजा ।** अधिकारखेदं निरूप्य । सर्वः प्रार्थितार्थमधिगम्य सुखी संपद्यते जन्तुः । राज्ञां तु चरितार्थतापि दुःखोत्तरैव । कुतः—

औत्सुक्यमात्रमवसाययति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ७ ॥

[ नेपथ्ये ] **वैतालिकौ ।** विजयतां देवः ।

**प्रथमः ।** स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथ वा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ ८ ॥

**द्वितीयः ।** नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ ९ ॥

**राजा ।** एते क्लान्तमनसः पुनर्नवीभूताः स्मः । परिक्रामति ।

---

६·११ इत इतो देवः ।

**प्रतीहारी ।** एसो अहिणवसंमज्जणसास्सिरीओ संणिहिदकविलधेणू अग्गिसरणालिन्दो । ता आरुहदु देवो ।

**राजा ।** आरोहणं नाटयित्वा परिजनांसावलम्बी तिष्ठन् । वेत्रवति । किमुद्दिश्य तत्रभवता काश्यपेन मत्सकाशमृषयः प्रहिताः स्युः ।

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।
आहोस्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ १० ॥

**प्रतीहारी ।** देवस्स भुवणपरिस्सङ्गणिव्वुदे चतुरस्समे कुदो एदं । किंदु सुचरिदाहिणन्दिणो इसिओ देवं सभाजयिदुमागदेत्ति तक्केमि ।

ततः प्रविशन्ति गौतमीसहिताः शकुन्तलां पुरस्कृत्य मुनयः ।
पुरश्चैषां पुरोहितकञ्चुकिनौ ।

**कञ्चुकी ।** इत इतो भवन्तः । सर्वे परिक्रामन्ति ।

**शार्ङ्गरवः ।** महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते ।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ ११ ॥

**शारद्वतः ।** स्थाने भवतः पुरप्रवेशादित्थंभूतः संवेगः । अहमपि—

---

९.२-३ एषोऽभिनवसंमार्जनसश्रीकः संनिहितकपिलधेनुरग्निशरणालिन्दः । तदारोहतु देवः ।

१०.१-३ देवस्य भुवनपरिष्वङ्गनिर्वृते चतुराश्रमे कुत एतत् । किं तु सुचरिताभिनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि ।

अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमस्वःसङ्गिनमवैमि ॥ १२ ॥

**शाकुन्तला ।** दुर्निमित्तं सूचयन्ती । अम्मो । किं वामेदरं मे णअणं विप्फुरदि ।

**गौतमी ।** पडिहदं अमङ्गलं । सुहाइं दे भत्तुकुलदेवदाओ विदरन्तु ।

परिक्रामन्ति ।

**पुरोहितः ।** राजानं निर्दिशन् । भोस्तपस्विनः । असावत्रभवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपालयति । पश्यतैनम् ।

**शार्ङ्गरवः ।** महाब्राह्मण । काममेतदभिनन्दनीयम् । तथापि वयमत्र मध्यस्थाः । कुतः –

भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्भूरिविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ १३ ॥

**प्रतीहारी ।** देव । पसण्णमुहराआ दीसन्ति सत्थकय्या इसिओ ।

**राजा ।** शकुन्तलां दृष्ट्वा । अथात्रभवती –

कास्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥ १४ ॥

**प्रतीहारी ।** देव । कुतूहलगब्भोपहिदो ण मे तक्को पसीददि ।

---

१२·१-२ अम्मो । किं वामेतरन्मे नयनं विस्फुरति ।

१२·३-४ प्रतिहतममङ्गलम् । सुखानि ते भर्तृकुलदेवता वितरन्तु ।

१३·१ देव । प्रसन्नमुखरागा दृश्यन्ते स्वस्थकार्या ऋषयः ।

१४·१ देव । कुतूहलगर्भोपहितो न मे तर्कः प्रसीदति ।

परिजनः । भट्टा । दंसणीआ क्खु से आकिदी लक्खीअदि ।

राजा । भवतु । अनिर्वर्णनीयं परकलत्रम् ।

शकुन्तला । हस्तमुरसि कृत्वा । आत्मगतम् । हिअअ । किं एव्वं वेपसि । अज्जउत्तस्स भावत्थिदिं सुमरिअ धीरं दाव होहि ।

पुरोहितः । पुरो गत्वा । देव । एते विधिवदर्चितास्तपस्विनः । कश्चिदेषामुपाध्यायसंदेशस्तं देवः श्रोतुमर्हति ।

राजा । अवहितोऽस्मि ।

ऋषयः । उपसृत्य हस्तानुद्यम्य । विजयस्व राजन् ।

राजा । सप्रणामम् । सर्वानभिवादये ।

ऋषयः । स्वस्ति भवते ।

राजा । अपि निर्विघ्नं तपः ।

ऋषयः । कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १५ ॥

राजा । अर्थवान्खलु मे राजशब्दः । अथ भगवाल्ँलोकानुग्रहाय कुशली काश्यपः ।

शार्ङ्गरवः । स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामयप्रश्नपूर्वकमिदमाह ।

राजा । किमाज्ञापयति भगवान् ।

शार्ङ्गरवः । शकुन्तलामुद्दिश्य । यन्मिथःसमयादिमां मदीयां दुहितरं भवानुपयेमे तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः—

---

१४·२ भर्तः । दर्शनीया खल्वस्या आकृतिर्लक्ष्यते ।

१४·४-५ हृदय । किमेवं वेपसे । आर्यपुत्रस्य भावस्थितिं स्मृत्वा धीरं तावद्भव ।

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्तिमती च सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥ १६ ॥

तदिदानीमापन्नसत्त्वेयं प्रतिगृह्यतां सहधर्मचरणाय – इति ।

**गौतमी ।** भद्दमुह । किंपि वत्तुकामम्हि । ण मे वअणावकासो अत्थि । कधं ति –

णापेक्खिदो गुरुअणो तुए इमीए ण पुच्छिदो बन्धू ।
एक्केक्कं एव्वं वरिदे भणामि किं एक्कमेक्कस्स ॥ १७ ॥

**शकुन्तला ।** स्वगतम् । किं णु क्खु अज्जउत्तो भणिस्सदि ।

**राजा ।** साशङ्काकुलमाकर्ण्य । अयि । किमिदमुपन्यस्तम् ।

**शकुन्तला ।** स्वगतम् । हुं । पावओ से वअणोपक्खेपो ।

**शार्ङ्गरवः ।** कथं नाम । अत्रभवन्त एव सुतरां लोकयात्रानिष्णाताः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥ १८ ॥

---

१६.२-३ भद्रमुख । किमपि वक्तुकामास्मि । न मे वचनावकाशोऽस्ति । कथमिति –

१७ नापेक्षितो गुरुजनस्त्वयानया न पृष्टो बन्धुः ।
एकैकमेवं वृते भणामि किमेकमेकस्य ॥

१७.१ किं नु खल्वार्यपुत्रो भणिष्यति ।

१७.३ हुं । पावकोऽस्य वचनोपक्षेपः ।

**राजा ।** किम् । अत्रभवती मया परिणीतपूर्वा ।

**शकुन्तला ।** सविषादमात्मगतम् । हिअअ । संपदं दे आसङ्का ।

**शार्ङ्गरवः ।** किं कृतकार्यद्वेषो धर्मं प्रति विमुखतोचिता राज्ञः ।

**राजा ।** कुतोऽयमसत्कल्पनाप्रसङ्गः ।

**शार्ङ्गरवः ।** मूर्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥ १९ ॥

**राजा ।** विशेषेणाधिक्षिप्तोऽस्मि ।

**गौतमी ।** शकुन्तलां प्रति । जादे मुहुत्तअं मा लज्ज । अवणइस्सं दाव दे ओउण्ठणं । तदो भट्टा तुमं अहिआणिस्सदि । यथोक्तं करोति ।

**राजा ।** शकुन्तलां निर्वर्णयन् । सविस्मयम् । आत्मगतम् ।

> इदमुपनतमेवं रूपमक्लिष्टकान्ति
> प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन् ।
> भ्रमर इव विभाते कुन्दमन्तस्तुषारं
> न च खलु परिभोक्तुं नैव शक्नोमि हातुम् ॥ २० ॥

**प्रतीहारी ।** अहो धम्मावेक्खिदा भट्टिणो । ईदिसं णाम सुहोवणदं रूवं पेक्खिअ को अण्णो विआरेदि ।

**शार्ङ्गरवः ।** भो राजन् । किमिति जोषमास्यते ।

**राजा ।** भोस्तपोधनाः । चिन्तयन्नपि न खलु स्वीकरणमत्र-

---

१८.२ हृदय । सांप्रतं त आशङ्का ।

१९.२-३ जाते । मुहूर्तकं मा लज्जस्व । अपनेष्यामि तावत्तेऽवगुण्ठनम् । ततो भर्ता त्वामभिज्ञास्यति ।

२०.१-२ अहो धर्मापेक्षिता भर्तुः । ईदृशं नाम सुखोपनतं रूपं प्रेक्ष्य कोऽन्यो विचारयति ।

भवत्याः स्मरामि। तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये।

**शकुन्तला।** अपवार्य। हद्धि। परिणए एव्व संदेहो। कुदो दाणिं मे दूरारोहिणी आसा।

**शार्ङ्गरवः।** मा तावत्।

कृताभिमर्शामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः।
मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥ २१ ॥

**शारद्वतः।** शार्ङ्गरव। विरम त्वमिदानीम्। शकुन्तले। वक्तव्यमुक्तमस्माभिः। सोऽयमत्रभवानिदमाह। तदीयतामस्मै प्रतिवचनम्।

**शकुन्तला।** स्वगतम्। सखेदं निःश्वस्य। इममवत्थन्तरं गदे तादिसे अणुरागे किं वा सुमराविदेण संपदं तेण। अध वा। अत्ता दाणिं मे सोधणीओत्थित्ति विवदिस्सं एदं। प्रकाशम्। अज्जउत्त। इत्यर्धोक्ते स्वगतम्। अध वा संसइदो दाणिं मे समुदाआरो। प्रकाशम्। पौरव। जुत्तं णाम पुरा अस्समपदे सब्भावुत्ताणहिअअं इमं जणं समअपुरवं पदारिअ ईदिसेहिं अक्खरेहिं पच्चाचक्खिदुं।

---

२०.७-८ हा धिक्। परिणय एव संदेहः। कुत इदानीं मे दूरारोहिण्याशा।

२१.४-१० इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन सांप्रतं ते। अथ वा। आत्मेदानीं मे शोधनीयोऽस्तीति विवदिष्याम्येतत्। [....] आर्यपुत्र। [....] अथ वा संशयित इदानीं मे समुदाचारः। [....] पौरव। युक्तं नाम पुराऽऽश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्येदृशैरक्षरैः प्रत्याचष्टुम्।

**राजा ।** कर्णौ पिधाय । **शान्तं पापम् ।**

**व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् ।**
**कूलंकषेव सिन्धुः प्रसन्नमोघं तटतरुं च ॥ २२ ॥**

**शाकुन्तला । जदि परमत्थदो परपरिग्गहसङ्किणा तुए एवं पउत्तं ता अहिण्णाणेण गुरुणा तुह आसङ्कामपणइस्सं ।**

**राजा । उदारः कल्पः ।**

**शाकुन्तला ।** मुद्रास्थानं परामृश्य । **हद्धि । अङ्गुलीअसुण्णा मे अङ्गुली ।** सविषादं गौतमीमवेक्षते ।

**गौतमी । णक्खु दे सक्कावदारे सचीतित्थोदकं अवगाहमाणाए पब्भट्टं अङ्गुलीअं ।**

**राजा ।** सस्मितम् । **इदं तद्यौतकं प्रत्युत्पन्नमतित्वं स्त्रीणामिति यदुच्यते ।**

**शाकुन्तला । एत्थ दाव विहिणा दंसिदं पभुत्तणं । अवरं दे कहइस्सं ।**

**राजा । श्रोतव्यमिदानीं संवृत्तम् ।**

**शाकुन्तला । ण क्खु तत्थ एक्कदिअहे णोमालिआमण्डवके णलिणीपत्तभाअणगदं उदअं तव हत्थे संणिहिदं आसी ।**

---

२२·१-२ यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं प्रवृत्तं तदभिज्ञानेन गुरुणा तवाशङ्कामपनेष्यामि ।

२२·४-५ हा धिक् । अङ्गुलीयशून्या मेऽङ्गुली ।

२२·६-७ न खलु ते शक्रावतारे शचीतीर्थोदकमवगाहमानायाः प्रभ्रष्टमङ्गुलीयकम् ।

२२·१०-११ अत्र तावद्विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि ।

२२·१३-१४ न खलु तत्रैकदिवसे नवमालिकामण्डपके नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् ।

राजा । शृणुमस्तावत् ।

शकुन्तला । तक्खणं च स मे पुत्तकिदओ दीहापङ्गो णाम हरिणपोदओ उअत्थिदो । तदो तुए – अअं दाव पढमं पिअदुत्ति अणुअम्पिणा – उवच्छन्दिदो उदएण । ण उण दे अपरिइदस्स हत्थब्भासं उवगदो । पच्छा तस्सिं एव उदए मए गिहीदे तेण किदो पणओ । तदा तुमं इत्थं पहसिदोसि – सव्वो सगन्धेसु विस्ससिदि । दुवे वि एत्थ आरण्णआ त्ति ।

राजा । विहसन् । एभिरात्मकार्यनिर्वर्तिनीनां योषितामनृतवाङ्मधुभिराकृष्यन्ते विषयिणः ।

गौतमी । महाभाग । णारुहसि एव्वं मन्तिदुं । तवोवणसंवड्ढिदो क्खु अअं जणो अणभिण्णो केदवस्स ।

राजा । तापसवृद्धे ।

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ २३ ॥

---

२२·१६-२१ तत्क्षणं च स मे पुत्रकृतको दीर्घापाङ्गो नाम हरिणपोतक उपस्थितः । ततस्त्वया – अयं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन । न पुनस्तेऽपरिचितस्य हस्ताभ्यासमुपगतः । पश्चात्तस्मिन्नेवोदके मया गृहीते तेन कृतः प्रणयः । तदा त्वमित्थं प्रहसितोऽसि – सर्वः सगन्धेषु विश्वसिति । द्वावप्यत्रारण्यकाविति ।

२२·२४-२५ महाभाग । नार्हस्येवं मन्त्रयितुम् । तपोवनसंवर्धितः खल्वयं जनोऽनभिज्ञः कैतवस्य ।

**शकुन्तला ।** सरोषम् । अणज्ज । अत्तणो हिअआणुमाणेन सव्वं पेक्खसि । को दाणिं अण्णो धम्मकञ्चुकपवेसिणो तिणच्छण्णकूवोपमस्स तवाणुकिदिं पडिवज्जिस्सदि ।

**राजा ।** आत्मगतम् । वनवासादविभ्रमः पुनरत्रभवत्याः कोपो लक्ष्यते । तथा हि

न तिर्यगवलोकि चक्षुरतिलोहितं केवलं
वचोऽपि परुषाक्षरं न च पदेषु संसज्जते ।
हिमार्त इव वेपते सकल एष बिम्बाधरः
स्वभावविनते भ्रुवौ युगपदेव भेदं गते ॥ २४ ॥

प्रकाशम् । भद्रे । प्रथितं दुःषन्तचरितं प्रजासु । तथापीदं न दृश्यते ।

**शकुन्तला ।**

तुम्हे य्येव पमाणं जाणथ धम्मात्थिदिं अ लोअस्स ।
लज्जाविणिज्जिदाओ जाणन्ति हु किं ण महिलाओ ॥२५॥

सुट्ठु दाव स्वच्छन्दआरिणी हदम्हि जा अहं इमस्स पुरुवंसधारस्स पच्चएण हिअअसत्थधारस्स मुहमहुणो हत्थब्भासं उवगदा । मुखमावृत्य रोदिति ।

**शार्ङ्गरवः ।** इत्थमप्रतिहतं चापलं दहति ।

अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ २६ ॥

---

२३·१-३ अनार्य । आत्मनो हृदयानुमानेन सर्वं प्रेक्षसे । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते ।

२५ यूयमेव प्रमाणं जानीथ धर्मस्थितिं च लोकस्य ।
लज्जाविनिर्जिता जानन्ति खलु किं न महिलाः ॥

२५·१-२ सुष्ठु तावत्स्वच्छन्दचारिणी हतास्मि याहमस्य पुरुवंशधरस्य प्रत्ययेन हृदयशस्त्रधरस्य मुखमधोर्हस्ताभ्यासमुपगता ।

**राजा।** अयि भोः। किमत्रभवतीप्रत्ययादेवास्मान्संभृतरोषाक्षरेण क्षिणुथ।

**शार्ङ्गरवः।** सासूयम्। श्रुतं भवद्भिरधरोत्तरम्।

आ जन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य।
परातिसंधानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः॥ २७॥

**राजा।** भोः सत्यवादिन्। अभ्युपगतं तावदस्माभिः। एवंविधा वयम्। किं पुनरिमामतिसंधाय लभ्यते।

**शार्ङ्गरवः।** विनिपातः।

**राजा।** विनिपातः पौरवैः प्रार्थ्यत इत्यश्रद्धेयमेतत्।

**शारद्वतः।** भो राजन्। किमुत्तरोत्तरैः। अनुष्ठितगुरुनिदेशाः स्मः। संप्रति निर्गच्छामहे वयम्।

तदेषा भवतः पत्नी त्यज वैनां गृहाण वा।
उपयन्तुर्हि दारेषु प्रभुता सर्वतोमुखी॥ २८॥

**गौतमि।** गच्छाग्रतः।

सर्वे प्रस्थिताः।

**शकुन्तला।** सदैन्यम्। हुं इमिणा दाव किदवेण विप्पलद्धम्हि। तुम्हे वि मं परिच्चअध। गौतमीमनुप्रतिष्ठते।

**गौतमी।** स्थित्वा। वच्छ सार्ङ्गरव। अणुगच्छदि एसा करुणपरिदेविणी सउन्दला। पच्चादेशपरुसे भत्तुणि किं वा पुत्तिका मे करोदु।

---

२८.३-४ हुं अनेन तावत्कितवेन विप्रलब्धास्मि। यूयमपि मां परित्यजथ।
२८.५-६ वत्स शार्ङ्गरव। अनुगच्छत्येषा करुणपरिदेविनी शकुन्तला। प्रत्यादेशपरुषे भर्तरि किं वा पुत्रिका मे करोतु।

**शार्ङ्गरवः ।** प्रतिनिवृत्य । आः पुरोभागे । किं स्वातन्त्र्यमवलम्बसे ।

**शकुन्तला ।** भीता वेपते ।

**शार्ङ्गरवः ।** शकुन्तले ।

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ २९ ॥

तिष्ठ । साधयामो वयम् ।

**राजा ।** भोस्तपस्विन् । किमत्रभवतीं विप्रलभसे । पश्य ।

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ ३० ॥

**शार्ङ्गरवः ।** यदा तु पूर्ववृत्तमन्यसङ्गाद्विस्मृतो भवांस्तदा कथमधर्मभीरुः ।

**राजा ।** भवन्तमेवात्र गुरुलाघवं पृच्छामि ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ ३१ ॥

**पुरोहितः ।** विचार्य । देव । यदि तावदेवं क्रियेत ।

**राजा ।** अनुशास्तु मां भवान् ।

**पुरोहितः ।** अत्रभवती तावदा प्रसवादापन्नसत्त्वा मद्गृहे तिष्ठतु । कुत इदमुच्यत इति चेत् – त्वं साधुभिरादिष्टः प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति तदा प्रतिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये पितुरस्याः समीपगमनमुपास्थितमेव ।

राजा। यथा गुरुभ्यो रोचते।

पुरोहितः। वत्से। अनुगच्छ माम्।

शकुन्तला। रुदती। भअवदि वसुंधरे। देहि मे विअरं।

निष्क्रान्ता सह पुरोधसा तपस्विभिश्च।

राजा। शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति।

नेपथ्ये। आश्चर्यम्। आश्चर्यम्।

राजा। आकर्ण्य। किं नु खलु स्यात्।

प्रविश्य। पुरोहितः। सविस्मयम्। देव। अद्भुतं खलु संवृत्तम्।

राजा। किमिव।

पुरोहितः। परावृत्तेषु कण्वशिष्येषु –

सा निन्दन्ती स्वानि भाग्यानि बाला<br>
बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता।

राजा। किं च।

पुरोहितः। स्त्रीसंस्थानं चाप्सरस्तीर्थमारा-<br>
दुत्क्षिप्यैनां ज्योतिरेकं तिरोऽभूत्॥ ३२॥

सर्वे विस्मयं रूपयन्ति।

राजा। भगवन्। प्रागेव सोऽस्माभिरर्थः प्रत्यादिष्ट एव। किं वृथा तर्केणान्विष्यते। विश्राम्यतु भवान्।

पुरोहितः। विजयस्व। निष्क्रान्तः।

राजा। वेत्रवति। पर्याकुलोऽस्मि। शयनभूमिमार्गमादेशय।

प्रतीहारी। इदो इदो देवो। परिक्रामन्ति।

---

३१·१० भगवति वसुंधरे। देहि मे विवरम्।

३२·५ इत इतो देवः।

**राजा ।** आत्मगतम् ।

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम् ॥ ३३ ॥

इति निष्क्रान्ताः सर्वे ।

॥ इति पञ्चमोऽङ्कः ॥

# ॥ अथ षष्ठोऽङ्कः ॥

## प्रवेशकः ।

ततः प्रविशति नागरिकः श्यालः पश्चाद्बद्धं पुरुषमादाय रक्षिणौ च ।

**रक्षिणौ** । पुरुषं ताडयित्वा । अले कुम्भीलआ । कधेहि । कहिं तए एशे महामणिपत्थलुक्किण्णणामक्खले लाअकीए अङ्गुलीअए शमाशादिदे ।

**पुरुषः** । भीतिनाटितकेन । पशीदन्तु पशीदन्तु भादुमिश्शे । ण क्खु हगे ईदिशश्श अकय्यश्श कालके ।

**प्रथमः** । किं णु क्खु शोहणे बम्हणे त्ति कलिअ लञ्ञा पदिग्गहे दिण्णे ।

**पुरुषः** । सुणध दाणिं । हगे शक्कावदालवासिके धीवले ।

**द्वितीयः** । पाडच्चल । किं खु दे अम्हेहिं जादी पुच्छिदा ।

**श्यालः** । सूअअ । कधेदु सव्वं अणुक्कमेण । अन्तरा मा णं पडिबन्धित्थ ।

---

०·२-४ अरे कुम्भीलक । कथय । कुत्र त्वयैतन्महामणिप्रस्तरोत्कीर्णनामाक्षरं राजकीयमङ्गुलीयकं समासादितम् ।

०·५-६ प्रसीदन्तु प्रसीदन्तु भावमिश्राः । न खल्वहमीदृशस्याकार्यस्य कारकः ।

०·७-८ किं नु खलु शोभनो ब्राह्मण इति कृत्वा राज्ञा प्रतिग्रहो दत्तः ।

०·९ शृणुतेदानीम् । अहं शक्रावतारवासिको धीवरः ।

०·१० पाटच्चर । किं खलु तवास्माभिर्जातिः पृष्टा ।

०·११-१२ सूचक । कथयतु सर्वमनुक्रमेण । अन्तरा मैनं प्रतिबध्नीतम् ।

रक्षिणौ । जं भट्टा आणवेदि । –भण । भण ।

पुरुषः । शे हगे जालवडिशादीहिं मश्चबन्धणोवाएहिं कुडुम्ब-भलणं कलेमि ।

श्यालः । प्रहस्य । विसुद्धो दाणिं दे आजीवो ।

पुरुषः । भट्टा ।

शहजे किल जे विणिन्दिदे
ण हु दे कम्म विवज्जणीअए ।
पशुमालणकम्मदालुणे
अणुकम्पामिदु एव्व शोत्तिए ॥ १ ॥

श्यालः । तदो तदो ।

पुरुषः । अधेकदिअशे खण्डशो लोहिदमश्चे मए कप्पिदे । जाव तश्श उदलब्भन्तले एदं महालदणभाशुलं अङ्गुलीअअं पेक्खामि ।

---

०·१३ यद्भर्ताज्ञापयति । –भण । भण ।

०·१४-१५ सोऽहं जालबडिशादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ।

०·१६ विशुद्ध इदानीं त आजीवः ।

०·१७ भर्तः ।

सहजं किल यद्विनिन्दितं
न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणो-
ऽनुकम्पामृदुरेव श्रोत्रियः ॥

१·१ ततस्ततः ।

१·२-३ अथैकदिवसे खण्डशो लोहितमत्स्यो मया कल्पितः । यावत्तस्य उदराभ्यन्तर इदं महारत्नभासुरमङ्गुलीयकं पश्यामि ।

पश्चा इध णं विक्कआअ दंसअन्ते गहीदे भावमिश्शेहिं। एत्तिके दाव एदश्श आगमे। अधुणा मालेध वा मुञ्चेध वा।

**श्यालः।** अङ्गुलीयकमाघ्राय। मच्छोदरसंठिदं ति णत्थि संदेहो। तधा अअं से विस्सगन्धो। आगमो दाणिं एदस्स विमरिसिदव्वो। ता एध। राउलं जेव्व गच्छम्ह।

**रक्षिणौ।** तह। — गश्च। अले गण्ठिभेदआ। गश्च।

सर्वे परिक्रामन्ति।

**श्यालः।** सूअअ। इध मं गोपुरदुवारे अप्पमत्ता पडिवालेध जाव इमं जधागमं अङ्गुलीअअं भट्टिणो णिवेदिअ तदीअशासणं पडिच्छिअ णिक्कमामि।

**उभौ।** पविसदु आवुत्ते सामिप्पसादाय। श्यालो निष्क्रान्तः।

**सूचकः।** जाणुअ। चिराअदि आउत्ते।

**जाणुकः।** णं अवशलोवसप्पणीआ लाआणो।

---

१·४-५ पश्चादिह तद्विक्रयाय दर्शयन्गृहीतो भावमिश्रैः। एतावांस्तावदेतस्यागमः। अधुना मारयत वा मुञ्चत वा।

१·६-८ .....। मत्स्योदरसंस्थितमिति नास्ति संदेहः। तथायं तस्य विस्रगन्धः। आगम इदानीमेतस्य विमर्शितव्यः। तदेत। राजकुलमेव गच्छामः।

१·९ तथा। — गच्छ। अरे गण्ठिभेदक। गच्छ।

१·११-१३ सूचक। इह मां गोपुरद्वारे अप्रमत्ता प्रतिपालयथ यावदेतद्यथागममङ्गुलीयकं भर्तुर्निवेद्य तदीयशासनं प्रतीच्छ्य निष्क्रमामि।

१·१४ प्रविशत्वार्यपुत्रः स्वामिप्रसादाय।

१·१५ जानुक। चिरायत्यार्यपुत्रः।

१·१६ नन्ववसरोपसर्पणीया राजानः।

सूचकः । वअश्श । फुलन्ति मे हत्था इमश्श वज्झश्श शुमणो पिणद्धुं ।

धीवरकः । णालुहदि भावे अकालणमालुके भविदुं ।

जाणुकः । विलोक्य । एशे अम्हाणं शामी पत्तहत्थे लाअशासणं पडिच्छिअ इदोमुहे देक्खीअदि । धीवरं प्रति । शउलाणं मुहं पेक्खशि अध वा गिद्धशिआलाणं बली भविश्शशि ।

प्रविश्य । श्यालः । शिग्घं शिग्घं एदं – इत्यर्धोक्ते –

धीवरकः । हा हदे म्हि । विषादं नाटयति ।

श्यालः । मुञ्चेध रे मुञ्चेध जालोवजीविणं । उववण्णो से किल अङ्गुलीअअस्स आअमो ।

सूचकः । जह आवुत्ते भणादि । पुरुषं परिमुक्तबन्धनं करोति ।

जाणुकः । एशे जमसदणं पविशिअ पडिणिवुत्ते ।

धीवरकः । श्यालं प्रणम्य । भट्टा । अह कीलिशे मे आजीवे ।

---

१·१७-१८ वयस्य । स्फुरतो मे हस्तावस्य वध्यस्य सुमनः पिनद्धुम् ।

१·१९ नार्हति भावोऽकारणमारको भवितुम् ।

१·२०-२२ एषोऽस्माकं स्वामी पत्रहस्तो राजशासनं प्रतीक्ष्येतोमुखो दृश्यते । ...... । श्वकुलानां मुखं प्रेक्षसे अथवा गृध्रशृगालानां बली भविष्यसि ।

१·२३ शीघ्रं शीघ्रं एतं – – – १·२४ हा हतोऽस्मि । .... ।

१·२५-२६ मुञ्चतं रे मुञ्चतं जालोपजीविनम् । उपपन्नोऽस्य किलाङ्गुलीयकस्यागमः । १·२७ यथा आर्यपुत्रो भणाति । .... ।

१·२८ एषो यमसदनं प्रविश्य प्रतिनिवृत्तः ।

१·२९ ..... । भर्तः । अथ कीदृशो मे आजीवः ।

श्यालः। उट्ठेहि। एशे भट्टिणा अङ्गुलीअअह्लशंमिदे पारिदोसिकेवि दाविदे। इति पुरुषायार्थं प्रयच्छति।

धीवरकः। सप्रणामं प्रतिगृह्य। अणुगिहिदोम्हि।

सूचकः। एशे णाम अणुगिहीदे जे शूलादो अवदालिअ हत्थिक्खन्दे पडिट्ठाविदे।

जाणुकः। आउत्त। पालिदोसिए कधेदि महालिहलदणेण तेण अङ्गुलीएण भट्टिणो पढमबहुमदेण होदव्वं।

श्यालः। ण अ तस्सिं महारिहरदणं ति बहुमाणं भट्टिणो तक्केमि।

उभौ। किं खु।

श्यालः। तक्केमि तस्स दंसणेण कोवि अहिलसिदो जणो भट्टिना सुमरिदो त्ति। जदो तं पेक्खिअ मुहुत्तं पइदिगम्भीरो पज्जुस्सुअमणो संवुत्तो।

सूचकः। शेविदं णाम आवुत्तेण।

---

१·३०-३१ उत्तिष्ठ। एष भर्त्रा अङ्गुलीयकमूल्यसंमितं पारितोषिकमपि दापितः।

१·३२ अनुगृहीतोऽस्मि।

१·३३-३४ एष नामानुगृहीतो यः शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः।

१·३५-३६ आर्यपुत्र। पारितोषिकं कथयति महार्हरत्नेन तेनाङ्गुलीयकेन भट्टिनः प्रथमबहुमतेन भवितव्यम्।

१·३७ न च तस्मिन्महार्हरत्नमिति बहुमानं भर्तुस्तर्कयामि।

१·३८ किं खलु।

१·३९·४१ तर्कयामि तस्य दर्शनेन कोऽपि अभिलषितो जनो भर्त्रा स्मृत इति। यतस्तत्प्रेक्ष्य मुहूर्तं प्रकृतिगम्भीरः पर्युत्सुकमनाः संवृत्तः।

१·४२ सेवितं नामार्यपुत्रेण।

**जानुकः ।** णं भणामि इमश्श कदे मश्चलिआशत्तुणो त्ति । धीवरं सासूयं पश्यति ।

**धीवरकः ।** भट्टालके । इदो अद्धं तुम्हाणं शुमणोमुल्लं भोदु ।

**श्यालः ।** धीवल । महत्तले शंपदं तुमं मे पिअवअश्शके शि संवुत्ते । कादम्बलीसक्खिअं अम्हाणं पढमसोहिदं इच्छीअदि । ता एहि । शुण्डिकागालं येव्व गच्छम्म ।

निष्क्रान्ताः सर्वे ।

**इति प्रवेशकः ।**

ततः प्रविशत्याकाशयानेन सानुमती नामाप्सराः ।

**सानुमती ।** णिव्वट्टिदं मए पज्जाअणिव्वट्टणिज्जं अच्छरातित्थसंणिज्झं जाव साहुजणस्स अभिसेअकालो । ता ताव इमस्स राएसिणो उदन्तं पच्चक्खीकरेमि । मेणआसंबन्धेण सरीरभूदा मे सउन्दला । ताए अ दुहिदुणिमित्तं आदिट्ठपुव्वम्हि । परिक्रम्य समन्तादवलोक्य च । **किं णु क्खु उच्छवदिणेवि**

---

१.४३-४४ ननु भणामि अस्य कृते मत्स्यलिकाशत्रोरिति ।

१.४५ भट्टारक । इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु ।

१.४६-४८ धीवर । महत्तरः साम्प्रतं त्वं मे प्रियवयस्यकोऽसि संवृत्तः । कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते । तदेहि । शौण्डिकागारमेव गच्छामः ।

१.५२-६० निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसांनिध्यं यावत्साधुजनस्याभिषेककालः । तत्तावदस्य राजर्षेरुदन्तं प्रत्यक्षीकरोमि । मेनकासंबन्धेन शरीरभूता मे शकुन्तला । तया च दुहितृनिमित्तमादिष्टपूर्वास्मि । ......... । किं नु खलूत्सवदिनेऽपि

णिरुच्छवारम्भं विअ राअउलं दीसदि । अत्थि मे विभवो पणिधाणेण सव्वं जाणिदुं । किंदु सहीए आदरो मए माणइदव्वो । होदु । इमाणं दाव उज्जाणपालिआणं तिरक्खरिणीपरिच्छण्णा पासपरिवत्तिणी भविअ उवलहिस्सं । नाट्येनावतीर्य स्थिता ।

ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी । अपरा च पृष्ठतस्तस्याः ।

**प्रथमा ।** आतम्महरिअवेण्टअ जो ऊससिओसि सुरभिमासस्स ।
दिट्ठोसि चूदकोरअ खणमङ्गलअं पसाएमि ॥ २ ॥

**द्वितीया ।** उपसृत्य । हला परहुदिए । किं णेदं एआइणी मन्तेसि ।

**परभृतिका ।** सहि । चूदलदिअं पेक्खिअ उम्मत्ता परहुदिआ भोदि ।

**द्वितीया ।** सहर्षम् । कधं । उवट्ठिदो महुमासो ।

**प्रथमा ।** महुअरिए । तुहावि दाणिं कालो एस मदविब्भमगीदाणं ।

---

निरुत्सवारम्भमिव राजकुलं दृश्यते । अस्ति मे विभवः प्रणिधानेन सर्वं ज्ञातुम् । किंतु सख्या आदरो मया मानयितव्यः । भवतु । अनयोस्तावदुद्यानपालिकयोस्तिरस्करिणीपरिच्छन्ना पार्श्वपरिवर्तिनी भूत्वोपलप्स्ये ।

२ आताम्रहरितवेण्टक य उच्छ्वसितोऽसि सुरभिमासस्य ।
दृष्टोऽसि चूतकोरक क्षणमङ्गलकं प्रसादयामि ॥

२.१ हला परभृतिके । किं न्वेदमेकाकिनी मन्त्रयसे ।

२.२-३ सखि । चूतलतिकां प्रेक्ष्य उन्मत्ता परभृतिका भवति ।

२.४ कथम् । उपस्थितो मधुमासः ।

२.५-६ मधुकरिके । तवापीदानीं काल एष मदविभ्रमगीतानाम् ।

**मधुकरिका ।** सहि । अवलम्बसु मं जाव अग्गपादपरिट्ठिदा भविअ चूदकलिअं गेण्हिअ कामदेवच्चणं करेमि ।

**परभृतिका ।** जदि ममावि अद्धं अच्चणफलस्स ।

**मधुकरिका ।** हला । अभणिदं पि एदं होदि जदो एक्कमेव णो दुधाट्ठिदं सरीरं । सख्यावलम्बितं कृत्वा चूतभङ्गं नाटयति । अम्महे । अप्पडिबुद्धोवि चूदप्पसवो एसो बन्धणभङ्गसुरही भोदि । कपोतहस्तकं कृत्वा । णमो भअवते मअरद्धजाअ ।

> अरिहसि मे चूअङ्कुर दिण्णो कामस्स गहिअधणुअस्स ।
> पहिअजणजुवइलक्खो पञ्चब्भहिओ सरो होउं ॥ ३ ॥

चूताङ्कुरं क्षिपति ।

प्रविश्यापटीक्षेपेण कुपितः **कञ्चुकी ।** मा तावदनात्मज्ञे । देवेन प्रतिषिद्धे वसन्तोत्सवे त्वमाम्रकलिकाभङ्गं किमारभसे ।

**उभे ।** भीते । पसीददु अय्यो । अगहिदत्था खु अम्हे ।

**कञ्चुकी ।** हुं । न खलु श्रुतं युवाभ्यां यद्वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिश्च पत्रिभिः । तथा हि–

---

२.७-८ सखि । अवलम्बस्व मां यावदग्रपादपरिस्थिता भूत्वा चूतकलिकां गृहीत्वा कामदेवार्चनं करोमि ।

२.९ यदि ममाप्यर्धमर्चनफलस्य ।

२.१०-१३ हला । अभणितमप्येतद्भवति यत एकमेव नो द्विधास्थितं शरीरम् । ..... । अम्महे । अप्रतिबुद्धोऽपि चूतप्रसव एष बन्धनभङ्गसुरभी भवति । ..... । नमो भगवते मकरध्वजाय ।

> अर्हसि मे चूताङ्कुर दत्तः कामस्य गृहीतधनुषः ।
> पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भवितुम् ॥

३.४ प्रसीदत्वार्यः । अगृहीतार्थे खल्वावाम् ।

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
संनद्धं यदपि स्थितं कुरबकं तत्कोरकावस्थया।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥ ४ ॥

**सानुमती।** णत्थि संदेहो। महापहावो राएसी।

**परभृतिका।** अज्ज। कतिचि दिअसा मित्तावसुणा रट्ठिएण भट्टिणीपादमूलादो पेसिदाणं अम्हाणं एत्थ आकीडगिहे चित्तकम्म अप्पिदं। अदो ण कदावि सुदपुरवो अम्हेहि एस वुत्तन्तो।

**कञ्चुकी।** भवतु। पुनर्नैवं वर्तितव्यम्।

**उभे।** अज्ज। कोदूहलं णो। जइ इमिणा जणेण सोदव्वं ता कधेदु अज्जो किंणिमित्तं भट्टिणा वसन्तूसवो पडिसिद्धो।

**सानुमती।** ऊसवपिआ राआणो। एत्थ गुरुणा कारणेण होदव्वं।

**कञ्चुकी।** बहुलीभूतमेतत्किं न कथ्यते। अस्ति भवत्योः कर्णपथमायातं शकुन्तलाप्रत्यादेशकौलीनम्।

**उभे।** अज्ज। सुदं रट्ठिअमुहादो जाव अङ्गुलीअअदंसणं।

---

४.१ नास्ति संदेहः। महाप्रभावो राजर्षिः।

४.२-४ आर्य। कति दिवसा मित्रावसुना राष्ट्रियेण भट्टिनीपादमूलात्प्रेषितयोरावयोरत्र प्रमदवने चित्रकर्मार्पितम्। अतो न कदापि श्रुतपूर्व आवयोरेष वृत्तान्तः।

४.६-७ आर्य। कौतूहलं नौ। यद्यनेन जनेन श्रोतव्यं तत्कथयत्वार्यः किंनिमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः।

४.८ उत्सवप्रिया राजानः। अत्र गुरुणा कारणेन भवितव्यम्।

४.११ आर्य। श्रुतं राष्ट्रियमुखाद्यावदङ्गुलीयकदर्शनम्।

कञ्चुकी । तेन हि स्वल्पं कथयितव्यम् । यदा खलु स्वाङ्गुलीयकदर्शनादनुस्मृतं देवेन सत्यमूढपूर्वा मया रहसि तत्रभवती शकुन्तला मोहात्प्रत्यादिष्टेति तदाप्रभृत्येव पश्चात्तापपरिगतो देवः –

रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्योपान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ॥ ५ ॥

सानुमती । पिअं मे ।

कञ्चुकी । अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः ।

उभे । जुज्जइ ।

नेपथ्ये । एदु एदु भवं ।

कञ्चुकी । कर्णं दत्त्वा । अयमित एवाभिवर्तते देवः । तत्स्वकर्मानुष्ठीयताम् ।

उभे । तह । निष्क्रान्ते ।

ततः प्रविशति पश्चात्तापसदृशवेषो राजा । विदूषकः प्रतीहारी च ।

कञ्चुकी । राजानमवलोक्य । अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम् । समुत्सुकोऽपि शकुन्तलां प्रति प्रियदर्शनो देवः । य एषः

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठोच्छ्लथं
बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः ।
चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥ ६ ॥

---

५·१ प्रियं मे । ५·३ युज्यते ।
५·४ एतु एतु भवान् । ५·७ तथा ।

**सानुमती ।** राजानं दृष्ट्वा । **थाणे क्खु पच्चादेसविमाणिदावि सउन्दला इमस्स किदे किलम्मदि ।**

**प्रतीहारी । एदु एदु महाराओ ।**

**राजा ।** ध्यानमन्दं परिक्रम्य ।

> **प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।**
> **अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम् ॥ ७ ॥**

**सानुमती । ईदिसाइं से तवस्सिणीए भाअधेआइं ।**

**विदूषकः ।** अपवार्य । **लङ्घिदो एस भूओ सउन्दलाबादेण । ण जाणे कधं चिकिच्छिदव्वो भविस्सदि ।**

**कञ्चुकी ।** उपगम्य । **जयतु जयतु देवः । महाराज । मया तावत्प्रत्यवेक्षिताः प्रमदवनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि देवः ।**

**राजा ।** प्रतीहारीं प्रति । **वसुमति । मद्वचनादमात्यपिशुनं ब्रूहि—चिरप्रबोधान्न संभावितमस्माभिरद्य धर्मासनमध्यासितुम् । यत्प्रत्यवेक्षितमार्येण पौरकार्यं तत्पत्रमारोप्य दीयतामिति ।**

**प्रतीहारी । जं देवो आणवेदि ।** निष्क्रान्ता ।

**राजा । पार्वतायन । त्वमपि स्वं नियोगमशून्यं कुरु ।**

**कञ्चुकी । तथा ।** निष्क्रान्तः ।

---

६·१-२ स्थाने खलु प्रत्यादेशविमानितापि शकुन्तलास्य कृते क्लाम्यति ।

६·३ एतु एतु महाराजः ।

७·१ ईदृशानि तस्यास्तपस्विन्या भागधेयानि ।

७·२-३ लङ्घित एष भूयः शकुन्तलावातेन । न जाने कथं चिकित्सितव्यो भविष्यति ।

७·१० यदेव आज्ञापयति ।

विदूषकः । किदं भवदा णिमक्खिअं । संपदं सिसिरविच्छेदरमणीए इमस्सिं पमदवणे सुहं विहरिस्सामो ।

राजा । वयस्य । रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते तदव्यभिचारि वचनम् । कुतः ।

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः ।
मनसिजेन सखे प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः ॥ ८ ॥

विदूषकः । चिट्ठ दाव । इमिणा दण्डकट्ठेण कन्दप्पबाणं णासइस्सामि । दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति ।

राजा । सस्मितम् । भवतु । दृष्टं ब्रह्मवर्चसम् । सखे । क्योपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि ।

विदूषकः । णं आसण्णपरिचारिआ चदुरिआ भवदा संदिट्ठा — माहवीमण्डवे इमं वेलं अदिवाहइस्सं । तहिं मे चित्तफलए सहत्थलिहिदं तत्थभोदीए सउन्दलाए पडिकिदिं आणेहि त्ति ।

राजा । ईदृशं मे हृदयानवस्थानम् । तत्तमेव मार्गमादेशय ।

विदूषकः । इदो इदो भवम् ।

उभौ परिक्रामतः । सानुमत्यनुगच्छति ।

---

७.१३-१४ कृतं भवता निर्मक्षिकम् । सांप्रतं शिशिरविच्छेदरमणीयेऽस्मिन्प्रमदवने सुखं विहरिष्यावः ।

८.१-२ तिष्ठ तावत् । अनेन दण्डकाष्ठेन कन्दर्पबाणं नाशयिष्यामि ।

८.५-७ नन्वासन्नपरिचारिका चतुरिका भवता संदिष्टा — माधवीमण्डपे इमां वेलामतिवाहयिष्ये । तत्र मे चित्रफलके स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति ।

८.९ इत इतो भवान् ।

**विदूषकः।** एसो मणिसिलापट्टअसणाहो माहवीमण्डवो विवित्तदाए णिस्सद्दं सागदेण विअ पडिच्छदि पिअवअस्सं। ता पविसिअ निसीददु भवं।

उभौ प्रविश्योपविष्टौ।

**सानुमती।** लदासंसिदा देक्खिस्सं दाव सहीए पडिकिदिं। तदो से भत्तुणो बहुमुहं अणुराअं णिवेदइस्सं। तथा स्थिता।

**राजा।** स्मरणमभिनीय। सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमदर्शनवृत्तान्तम्। कथितवानस्मि भवते च। स भवान्प्रत्यादेशवेलायां मत्समीपगत एव नासीत्। प्रथममपि न त्वया कदाचित्संकथासु कीर्तितं तत्रभवत्या नाम। कच्चिदहमिव मिथःसंविदं विस्मृतवानसि त्वम्।

**विदूषकः।** ण विसुमरामि। किं तु सव्वं कहिअ अवसाणे तए–परिहासविअप्प एसो ण भूदत्थेति रहस्सभेदभीरुणा आचक्खिदं। मएवि मिप्पिण्डबुद्धिणा तहा एव्व गिहिदं। अह वा भविदव्वदा बलवदी।

**सानुमती।** एव्वं णेदं।

---

८.११-१३ एष मणिशिलापट्टकसनाथो माधवीमण्डपो विविक्ततया निःशब्दं स्वागतेनेव प्रतीच्छति प्रियवयस्यम्। तत्प्रविश्य निषीदतु भवान्।

८.१५-१६ लतासंश्रिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम्। ततोऽस्यै भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि।

८.२२-२५ न विस्मरामि। किं तु सर्वं कथयित्वावसाने त्वया–परिहासविजल्प एष न भूतार्थ इति रहस्यभेदभीरुणा आख्यातम्। मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम्। अथ वा भवितव्यता बलवती।

८.२६ एवं न्विदम्।

**राजा ।** ध्यात्वा । सखे । परित्रायस्व माम् । परित्रायस्व माम् ।

**विदूषकः ।** भो । किं एदं ईदिसं उववण्णं तुइ । कदा उण सप्पुरुसा सोअवद्धधिय्या होन्ति । णं पवादे वि णिप्पकम्पा गिरिओ ।

**राजा ।** वयस्य । निराकरणविक्लवायाः प्रियायाः समवस्थामनुस्मृत्य बलवदस्वस्थोऽस्मि । सा हि मया

इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥ ९ ॥

**सानुमती ।** अम्महे । ईदिसी सकज्जपरदा । इमस्स सन्दावेण अहं रमामि ।

**विदूषकः ।** अत्थि दे वितक्को केण तत्तभोदी आआसगामिणा अवणीदेत्ति ।

**राजा ।** कः पतिदेवतामन्यः परिमार्ष्टुमुत्सहेत । मेनका किल सख्यास्ते जन्मप्रतिष्ठेति श्रुतवानस्मि । तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते ।

**सानुमती ।** संमोहो क्खु विम्हअणीओ ण उण पडिबोहो ।

---

८.२८-३० भोः । किमिदमीदृशमुपपन्नं त्वयि । कदा पुनः सत्पुरुषाः शोकबद्धधैर्या भवन्ति । ननु प्रवातेऽपि निष्प्रकम्पा गिरयः ।

९.१-२ अम्महे । ईदृशी स्वकार्यपरता । एतस्य सन्तापेनाहं रमे ।

९.३-४ अस्ति ते वितर्कः केन तत्रभवत्याकाशगामिनापनीतेति ।

९.८ संमोहः खलु विस्मयनीयो न पुनः प्रतिबोधः ।

९ **विदूषकः।** जइ एव्वं अत्थि क्खु समाअमोवि कालेण तत्तभोदीए।

**राजा।** कथमिव।

१२ **विदूषकः।** णक्खु मादा पिदा वा भत्तुविओअदुक्खिदं दुहिदरं चिरं पेक्खिदुं पारेदि।

**राजा।** वयस्य।

स्वप्नो नु माया नु मतिभ्रमो नु
क्लिष्टं नु तावत्फलमेव पुण्यम्।
असंनिवृत्त्यै तदतीतमेते
मनोरथा नाम तटप्रपाताः॥ १०॥

**विदूषकः।** भो मा एव्वं। णं अङ्गुलीअअं जेव्व णिदंसणं अवस्संभाविणो अचिन्तणिज्जो समागमो होदि त्ति।

३ **राजा।** अङ्गुलीयं विलोक्य। इदं तदसुलभस्थानभ्रंशि शोचनीयम्।

तव सुचरितमङ्गुलीय नूनं
प्रतनु ममेव विभाव्यते फलेन।
अरुणनखमनोहरासु तस्याश्-
च्युतमसि लब्धपदं यदङ्गुलीषु॥ ११॥

**सानुमती।** जइ अण्णहत्थगदं भवे सच्चं एव्व सोअणिज्जं भवे।

---

९.९-१० यद्येवम् अस्ति खलु समागमोऽपि कालेन तत्रभवत्या।

९.१२-१३ न खलु माता पिता वा भर्तृवियोगदुःखितां दुहितरं चिरं प्रेक्षितुं पारयति।

१०.१-२ भोः मा एवम्। नन्वङ्गुलीयकमेव निदर्शनमवश्यंभावीऽचिन्तनीयः समागमो भवतीति।

११.१ यद्यन्यहस्तगतं भवेत्सत्यमेव शोचनीयं भवेत्।

**विदूषकः।** भो वअस्स। इअं णाममुद्दा केण उग्घादेण तत्तभोदीए हत्थसंसग्गं पाविदा।

**सानुमती।** मम वि कोदूहलेण आआरिदो एसो।

**राजा।** श्रूयताम्। यदा तपोवनात्स्वनगरप्रास्थितं मां प्रिया सबाष्पमाह — कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यतीति।

**विदूषकः।** तदो तदो।

**राजा।** पश्चादिमां नाममुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहितम् —

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छसि यावदन्तम्।
तावत्प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति ॥ १२ ॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितम्।

**सानुमती।** रमणीओ क्खु अवधी विहिणा विसंवादिदो।

**विदूषकः।** अध कधं दासीए उत्तस्स लोहिदमच्छस्स बडिसं विअ एदं अङ्गुलीयअं मुहे पविट्ठं।

---

११·२-३ भो वयस्य। इयं नाममुद्रा केनोद्घातेन तत्रभवत्या हस्तसंसर्गं प्रापिता।

११·४ ममापि कौतूहलेनाकारित एषः।

११·७ ततस्ततः।

१२·२ रमणीयः खल्ववधिर्विधिना विसंवादितः।

१२·३-४ अथ कथं दास्याः पुत्रस्य रोहितमत्स्यस्य बडिशमिवेदमङ्गुलीयकं मुखे प्रविष्टम्।

**राजा।** शचीतीर्थं वन्दमानायास्ते सख्या हस्ताद्गङ्गास्रोतसि परिभ्रष्टम्।

**विदूषकः।** जुज्जदि।

**राजा।** उपालप्स्ये तावदिदमङ्गुलीयकम्।

**विदूषकः।** आत्मगतम्। गहीदो णेण पन्था उम्मत्ताणं।

**राजा।** कथं नु तं बन्धुरकोमलाङ्गुलिं
करं विहायासि निमग्नमम्भसि।

अथ वा

अचेतनं नाम गुणं न लक्षये-
न्मयैव कस्मादवधीरिता प्रिया ॥ १३ ॥

प्रिये। अकारणपरित्यागानुशयतप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन।

प्रविश्य पटाक्षेपेण चित्रफलकहस्ता **चतुरिका।** इअं चित्तगदा भट्टिणी। चित्रफलकं दर्शयति।

**विदूषकः।** साहु वअस्स साहु। महुरावत्थाणदंसणिज्जो भावाणुप्पवेसो। क्खलदि इव मे दिट्ठी णिण्णुण्णदप्पदेसेसु।

**सानुमती।** अम्मो। एसा राएसिणो वट्टिआणिउणदा। जाणे पिअसही मे अग्गदो वट्टदित्ति।

---

१२·७ युज्यते। १२·९ गृहीतोऽनेन पन्था उन्मत्तानाम्।

१३·३-४ इयं चित्रगता भट्टिनी।

१३·५-६ साधु वयस्य साधु। मधुरावस्थानदर्शनीयो भावानुप्रवेशः। स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु।

१३·७-८ अहो। एषा राजर्षेर्वर्तिकानिपुणता। जाने प्रियसखी मेऽग्रतो वर्तत इति।

**विदूषकः ।** निर्वर्ण्य । भो । तिण्णि अत्तभोदीओ दीसन्ति । सव्वाओ दंसणीआओ । कदमा तत्थभोदी सउन्दला ।

**सानुमती ।** अणभिण्णो क्खु सहीरूवस्स मोहदिट्ठी अअं जणो ।

**राजा ।** त्वं तावत्कतमां तर्कयसि ।

**विदूषकः ।** चिरं विलोक्य । तक्केमि जा एसा सिढिलकेसबन्धणुव्वन्तकुसुमेण केसन्तेण उब्भिण्णसेअबिन्दुणा वअणेण विसेसदो ओसरिआहिं बाहाहिं ऊससिदणीविणा वसणेण अवसेअसिणिद्धतरुणपल्लवस्स चूअपाअवस्स पासे इसिपरिस्सन्ता विअ आलिहिदा सा तत्थभोदी सउन्दला । इदराओ सहीओ त्ति ।

**राजा ।** निपुणो भवान् । अस्त्यत्र मे भावचिह्नम् ।

स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः ।
अश्रु च कपोलपतितं लक्ष्यमिदं वर्त्तिकोच्छ्वासात् ॥ १४ ॥

चतुरिके । अर्धलिखितमेतद्विनोदस्थानम् । गच्छ । वर्तिकां तावदानय ।

**चतुरिका ।** अज्ज माधव्व । अवलम्ब चित्तफलअं जाव आअच्छामि ।

---

१३·९-१० भोः । तिस्रोऽत्रभवत्यो दृश्यन्ते । सर्वा दर्शनीयाः । कतमा तत्रभवती शकुन्तला ।

१३·११ अनभिज्ञः खलु सखीरूपस्य मोघदृष्टिरयं जनः ।

१३·१३-१७ तर्कयामि यैषा शिथिलकेशबन्धनोद्वान्तकुसुमेन केशान्तेनोद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽपसृताभ्यां बाहुभ्यामुच्छ्वसितनीविना वसनेनावसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेवालिखिता सा तत्रभवती शकुन्तला । इतरे सख्याविति ।

१४·३-४ आर्य माधव्य । अवलम्बस्व चित्रफलकं यावदागच्छामि ।

**राजा ।** अहमेवैतदवलम्बे । यथोक्तं करोति । निष्क्रान्ता चेटी ।

**राजा ।** निःश्वस्य ।

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितामहमिमां बहु मन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान्मृगतृष्णिकायाम् ॥ १५ ॥

**विदूषकः ।** भो । किमवरं एत्थ अभिलिहिदव्वं ।

**सानुमती ।** असंसअं जो जो सहीए मे अभिरुइदो पदेसो भवे तं आलिहिदुकामो भविस्सदि ।

**राजा ।** श्रूयताम् ।

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णचमरा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ १६ ॥

**विदूषकः ।** आत्मगतम् । जह अहं देक्खामि पूरिदव्वं णेण चित्तफलअं लम्बकुच्चाणं कदम्बेहिं ।

**राजा ।** वयस्य । अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतमत्र विस्मृतमस्माभिः ।

**विदूषकः ।** किं विअ ।

---

१५.१ भोः । किमपरमत्राभिलिखितव्यम् ।

१५.२-३ असंशयं यो यः सख्या मेऽभिरुचितः प्रदेशो भवेत्तमालिखितुकामो भविष्यति ।

१६.१-२ यथाहं पश्यामि पूरयितव्यमनेन चित्रफलकं लम्बकूर्चानां कदम्बैः ।

१६.५ किमिव ।

सानुमती । वणवासस्स सोउमारस्स अ जं सरिसं भविस्सदि ।

राजा । कृतं न कर्णार्पितबन्धनं सखे
शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ १७ ॥

विदूषकः । भोः । किं णु क्खु तत्थभोदी रत्तकुवलअसोहिणा अग्गहत्थेण मुहं आवारिअ चकिदचकिदा विअ ठिदा । दृष्ट्वा । आ । एसो दासीए उत्तो कुसुमरसपाडच्चरो तत्थभोदीए वअणकमलमहिलसति ।

राजा । ननु वार्यतामेष धृष्टः ।

विदूषकः । भो । भवं जेव्व अविणीदाणुसासणे पहवति ।

राजा । युज्यते । अयि भोः कुसुमलताप्रियातिथे । किमितः परिपतनखेदमनुभवसि ।

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु त्वया विना पिबति ॥ १८ ॥

सानुमती । अभिजादं खु एसो वारिदो ।

विदूषकः । पडिसिद्धवामा एसा जादी ।

---

१६·६ वनवासस्य सौकुमार्यस्य च यत्सदृशं भविष्यति ।

१७·१-४ भोः । किं नु खलु तत्रभवती रक्तकुवलयशोभिनाग्रहस्तेन मुखमावार्य चकितचकितेव स्थिता । ..... । आः । एष दास्याः-पुत्रः कुसुमरसपाटच्चरस्तत्रभवत्या वदनकमलमभिलषते ।

१७·६ भोः । भवानेवाविनीतानुशासने प्रभवति ।

१८·१ अभिजातं खल्वेष वारितः ।

१८·२ प्रतिषिद्धवामा एषा जातिः ।

**राजा ।** एवं भोः न मे शासने तिष्ठसि । श्रूयतां तर्हि संप्रति –

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं स्पृशसि चेद्भ्रमर प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ १९ ॥

**विदूषकः ।** एव्वं तिक्खदण्डस्स दे कधं ण भाइस्सदि । प्रहस्य । आत्मगतम् । एसो दाव उम्मत्तो । अहं पि एदस्स संसग्गेण ईदिसो ज्जेव संवुत्तो । प्रकाशम् । भो चित्तं खु एदं ।

**राजा ।** कथं चित्रम् ।

**सानुमती ।** अहं पि दाणिं अवगदत्था । किं उण जधालिहिदाणुभावी एसो ।

**राजा ।** सविषादम् । वयस्य । किमिदमनुष्ठितं पौरोभाग्यम् ।

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ २० ॥

बाष्पं विसृजति ।

**सानुमती ।** पुव्वावरविरोही अपुव्वो एसो विरहमग्गो ।

**राजा ।** वयस्य । कथमेवमविश्रान्तं दुःखमनुभवामि ।

प्रजागरात्खिलीभूतस्तस्याः स्वप्नसमागमः ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २१ ॥

---

१९.१-३ एवं तीक्ष्णदण्डस्य ते कथं न भेष्यति । ..... । ...... । एष तावदुन्मत्तः । अहमप्येतस्य संसर्गेणेदृश एव संवृत्तः । ...... । भोश्चित्रं खल्वेतत् ।

१९.५-६ अहमपीदानीमवगतार्था । किं पुनर्यथालिखितानुभाव्येषः ।

२०.२ पूर्वापरविरोधी अपूर्व एष विरहमार्गः ।

सानुमती । सव्वधा पमज्जितं तुए पच्चादेसदुक्खं सउन्दलाए ।

प्रविश्य । चतुरिका । जेदु जेदु भट्टा । वट्टिआकरण्डकं गेण्हिअ इदोमुहं पत्थिदाम्हि ।

राजा । किं च ।

चतुरिका । सो मे हत्थादो तरलिआदुदीआए देवीए वसुमदीए अहं जेव्व अज्जउत्तस्स उवणइस्सं ति सबलक्कारं गहीदो ।

विदूषकः । दिट्ठिआ तुमं मुक्का ।

राजा । वयस्य । उपस्थिता देवी बहुमानगर्विता च । तद्भवानिमां प्रतिकृतिं रक्षतु ।

विदूषकः । अत्ताणं त्ति भणाहि । चित्रफलकमादायोत्थाय च । जइ भवं अन्तेउरकालकूटादो मुच्चीअदि तदो मं मेहपडिच्छन्दप्पासादे सद्दावेहि । द्रुतपदं निष्क्रान्तः ।

सानुमती । अण्णसंकन्तहिअओवि पढमसंभावणमवेक्खति अदिसिढिलसोहदो दाणिं एसो ।

---

२१·१ सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः ।

२१·२-३ जयतु जयतु भर्ता । वर्तिकाकरण्डकं गृहीत्वेतोमुखं प्रस्थितास्मि ।

२१·५-६ स मे हस्तात्तरलिकाद्वितीयया देव्या वसुमत्या – अहमेवार्यपुत्रस्योपनेष्यामि – इति सबलात्कारं गृहीतः ।

२१·७ दिष्ट्या त्वं मुक्ता ।

२१·१०-१२ आत्मानमिति भण । ...... । यदि भवानन्तःपुरकालकूटान्मुच्यते ततो मां मेघप्रतिच्छन्दप्रासादे शब्दापय । ...... ।

२१·१३-१४ अन्यसंक्रान्तहृदयोऽपि प्रथमसंभावनमपेक्षतेऽतिशिथिलसौहार्द इदानीमेषः ।

प्रविश्य पत्रहस्ता । **प्रतीहारी ।** जअदु जअदु देवः ।

**राजा ।** वेत्रवति । न खल्वन्तरा दृष्टा त्वया देवी ।

**प्रतीहारी ।** अह इं । पत्तहत्थं मं पेक्खिअ पडिणिउत्ता ।

**राजा ।** कालज्ञा कार्योपरोधं मे परिहरति ।

**प्रतीहारी ।** देव । अमच्चो विण्णवेदि — अत्थजादस्स गणणाबहुलदाए एक्कं एव्व पोरकज्जं पच्चवेक्खिदं । तं देवो पत्तारूढं पच्चक्खीकरेदुत्ति ।

**राजा ।** मेधाविनि । वाच्यताम् ।

**मेधाविनी ।** पत्रकं प्रसार्य वाचयति । विदितमस्तु देवपादानां यथा — धनवृद्ध इति यथार्थनामा वणिग्वारिपथोपजीवी नौव्यसनेन विपन्नः । स चानपत्यः । तस्य कोटिशतसंख्यातं वसु । तदिदानीं राजस्वतामापद्यते । श्रुत्वा देवः प्रमाणम् — इति ।

**राजा ।** आकम्पितः । कष्टा खल्वनपत्यता । वेत्रवति । महाधनत्वान्नैकपत्नीकेन भवितव्यम् । तदन्विष्यतां यदि काचिदापन्नसत्त्वा स्यात् ।

**प्रतीहारी ।** इदाणीं जेव्व केसवसेट्ठिणो दुहिदा णिवुत्तपुंसवणा जाआ सुणीअदि ।

---

२१·१५ जयतु जयतु देवः ।

२१·१७ अथ किम् । पत्रहस्तं मां प्रेक्ष्य प्रतिनिवृत्ता ।

२१·१९-२१ देव । अमात्यो विज्ञापयति — अर्थजातस्य गणनाबहुलतया एकमेव पौरकार्यं प्रत्यवेक्षितम् । तद्देवो पत्रारोपितं प्रत्यक्षीकरोतु — इति ।

२१·३०-३१ इदानीमेव केशवश्रेष्ठिनो दुहिता निवृत्तपुंसवना जाया श्रूयते ।

राजा । ननु स गर्भः पित्र्यमृक्थमर्हति । गच्छ । एवममात्यं ब्रूहि ।

प्रतीहारी । जं देवो आणवेदि ।

प्रस्थिता ।

राजा । एहि तावत् ।

प्रतीहारी । निवृत्य । एसा म्हि ।

राजा । अथ वा । किमनेन संततिरस्ति नास्तीति ।

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुःषन्त इति घुष्यताम् ॥ २२ ॥

प्रतीहारी । इदं णाम घोसइदव्वं । निष्क्रम्य पुनः प्रविश्य । देव । काले पवुट्ठं विअ अहिणंदिदं देवसासणं महाजनेन ।

राजा । दीर्घं निःश्वस्य । एवं संततिच्छेदनिरवलम्बानां कुलानां मूलपुरुषाणामवसाने संपदः परमुपतिष्ठन्ते । समाप्यन्ते पुरुवंशश्रिय एष एव वृत्तान्तः ।

प्रतीहारी । पडिहतममङ्गलं ।

राजा । धिङ् मामुपस्थितश्रेयोवमानिनम् ।

सानुमती । असंसअं सहिं जेव्व हिअए कदुअ णिन्दिदो अणेण अप्पा भविस्सदि ।

---

२१·३४ यदेव आज्ञापयति ।

२१·३७ एषास्मि ।

२२·१-२ इदं नाम घोषयितव्यम् । ............ । देव । काले प्रवृष्टमिवाभिनन्दितं देवशासनं महाजनेन ।

२२·६ प्रतिहतममङ्गलम् ।

२२·८-९ असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा ।

**राजा।** संरोपितेऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा।
कल्पिष्यमाणा महते फलाय
वसुंधरा काल इवोप्तबीजा ॥ २३ ॥

**सानुमती।** अपरिच्छिण्णा दाणिं दे संददी भविस्सदि।

**चतुरिका।** जनान्तिकम्। अज्जे। इमिणा सत्थवाहवुत्तन्तेण विमणाअदि भट्टा। ता मेहप्पडिच्छन्दादो अज्जमाहवं गेण्हिअ आअच्छ।

**प्रतीहारी।** सुट्ठु भणासि।

निष्क्रान्ता।

**राजा।** अहो दुःषन्तस्य संशयमारूढाः पिण्डभाजः।

अस्मात्परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि करिष्यतीति।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति ॥ २४ ॥

शोकावेगनाटितकेन।

आमूलशुद्धसंतति कुलमेतत्पौरवं प्रजावन्ध्ये।
मय्यस्तमितमनार्ये देश इव सरस्वतीस्रोतः ॥ २५ ॥

मोहमुपगतः।

**चतुरिका।** समस्ससदु समस्ससदु भट्टा।

---

२३·१ अपरिच्छिन्नेदानीं ते संततिर्भविष्यति।

२३·२-४ आर्ये। अनेन सार्थवाहवृत्तान्तेन विमनायते भर्ता। तन्मेघप्रतिच्छन्दादार्यमाधव्यं गृहीत्वागच्छ।

२३·५ सुष्ठु भणसि।

२५·२ समाश्वसतु समाश्वसतु भर्ता।

**सानुमती ।** हद्धि हद्धि । सदि खु दीवे ववधाणदोसेण एसो अन्धकारं अणुहोदि । किं इदाणिं जेव्व णं णिव्वुदं करइस्सं । अह वा सुदं मए सउन्दलं समस्सासअन्तीए महेन्दजणणीए मुहादो जण्णभाअसमुस्सुआओ देवदाओ तधा अणुचिट्ठिसंदि जह अइरेण एस राएसी धम्मचारिणीए समागमिस्सदि । जाव इमिणा वुत्तन्तेण पिअसहिं समस्सासेमि । उद्भ्रान्तकेन निष्क्रान्ता ।

**नेपथ्ये ।** अब्बम्हण्णं अब्बम्हण्णं ।

**राजा ।** प्रत्यागतः । कर्णं दत्त्वा । **अये । माधव्यस्येवार्तस्वरः । कः कोऽत्र भोः ।**

प्रविश्य । **प्रतीहारी ।** ससंभ्रमम् । **परित्ताअदु देवो संसअगदं वअस्सं ।**

**राजा ।** केनात्तगन्धो माणवकः ।

**प्रतीहारी ।** अदिट्ठरूवेण केणवि सत्तेण अक्कमिअ मेहप्पडिच्छन्दपासादस्स अग्गभूमिं आरोविदो ।

---

२५.३-८ हा धिक् । हा धिक् । सति खलु दीपे व्यवधानदोषेणैषोऽन्धकारमनुभवति । किमिदानीमेवैनं निर्वृतं करिष्ये । अथ वा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखात्—यज्ञभागसमुत्सुका देवतास्तथानुष्ठास्यन्ति यथाचिरेणैष राजर्षिर्धर्मचारिण्या समागमिष्यति । यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि ।

२५.९ अब्रह्मण्यम् अब्रह्मण्यम् ।

२५.१२-१३ परित्रायतु देवः संशयगतं वयस्यम् ।

२५.१५-१६ अदृष्टरूपेन केनापि सत्त्वेन मेघप्रतिच्छन्दप्रासादस्याग्रभूमिमारोपितः ।

**राजा ।** सहसोत्थाय । **मा तावत् । ममापि सत्त्वैरभिभूयन्ते गृहाः । अथ वा । बहुप्रत्यवायं नृपत्वम् ।**

**अहन्यहन्यात्मन एव ताव-**
**ज्ज्ञातुं प्रमादस्खलितं न शक्यम् ।**
**प्रजासु कः केन पथा प्रयाती-**
**त्यशेषतो वेदितुमस्ति शक्तिः ॥ २६ ॥**

**नेपथ्ये । भो वअस्स । अविहा । अविहा ।**

**राजा ।** गतिभेदेन परिक्रामन् । **वयस्य । न भेतव्यम् । न भेतव्यम् ।**

नेपथ्ये । **विदूषकः । कधं ण भाइस्सं । एस मं कोवि पच्चामोडिदसिरोधरं इक्खुं विअ तिण्हभङ्गं करेदि ।**

**राजा ।** सदृष्टिक्षेपम् । **धनुर्धनुस्तावत् ।**

प्रविश्य शार्ङ्गहस्ता । **यवनी । जअदु जअदु भट्टा । एदं सरासणं हत्थावापसहिदं ।**

**राजा ।** सशरं धनुरादत्ते ।

**नेपथ्ये ।** **एष त्वामभिनवकण्ठशोणितार्थी**
**शार्दूलः पशुमिव हन्मि चेष्टमानम् ।**
**आर्तानां भयमपनेतुमात्तधन्वा**
**दुःषन्तस्तव शरणं भवत्विदानीम् ॥ २७ ॥**

---

२६·१ भो वयस्य । अविहा । अविहा ।

२६·४-५ कथं न भेष्यामि । एष मां कोऽपि पश्चान्मोटितशिरोधरमिक्षुमिव त्रिभङ्गं करोति ।

२६·७-८ जयतु जयतु भर्ता । इदं शरासनं हस्तावापसहितम् ।

**राजा ।** सरोषम् । **कथं मामेवोद्दिशति । तिष्ठ तिष्ठ कुणपाशन । अयमिदानीं न भवसि ।** चापमारोप्य । **वेत्रवति । सोपानमार्गमादेशय ।**

**प्रतीहारी । इदो इदो देवो ।**

सर्वे सत्वरमुपसर्पन्ति ।

**राजा ।** समन्तादवलोक्य । **शून्यं खल्विदम् ।**

नेपथ्ये । **विदूषकः । अविहा । अहं भवन्तं पेक्खामि । तुमं मं ण पेक्खसि । मज्जारगहीदो विअ उन्दुरो णिरासोम्हि जीविदे संवुत्तो ।**

**राजा । भोस्तिरस्करिणीगर्वित । मदीयमस्त्रं त्वां द्रक्ष्यति । एष त्वदर्थं तमिषुं संदधे–**

यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रां वर्जयत्यपः ॥ २८ ॥

अस्त्रं संधत्ते ।

ततः प्रविशति विदूषकमुत्सृज्य मातलिः । विदूषकश्च ।

**मातलिः । आयुष्मन् ।**

कृताः शरव्यं हरिणा तवासुराः
शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ॥ २९ ॥

---

२८.४ इत इतो देवः ।

२७.७-९ अविहा । अहं भवन्तं प्रेक्षामि । त्वं मां न प्रेक्षसि । मार्जारगृहीत इव उन्दुरो निराशोऽस्मि जीविते संवृत्तः ।

**राजा ।** अस्त्रमुपसंहरन् । अये मातलिः । स्वागतं देवराजसारथये ।

**विदूषकः ।** निकटमेत्य । भो । अहं णेण इट्ठिपसुमारं मारिदो । इमं पि सागदेण अभिणन्दसि ।

**मातलिः ।** सस्मितम् । आयुष्मन् । श्रूयतां यदस्मि हरिणा त्वत्सकाशं प्रेषितः ।

**राजा ।** अवहितोऽस्मि ।

**मातलिः ।** अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः ।

**राजा ।** श्रुतपूर्वो मया नारदात् ।

**मातलिः ।** सख्युस्ते स किल शतक्रतोरवध्य-
स्तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तं नैशं तिमिरमपाकरोति चन्द्रः ॥ ३० ॥

स भवानात्तचाप एवेदानीमैन्द्रं रथमारुह्य विजयाय प्रतिष्ठताम् ।

**राजा ।** अनुगृहीतोऽहमनया मघवतः संभावनया । अथ माधव्यं प्रति किमेवं प्रयुक्तम् ।

**मातलिः ।** सस्मितं विदूषकमवलोक्य । तदपि कथ्यते । कुतोऽपि-निमित्तान्मनस्तापादायुष्मान्मया विक्लवो दृष्टः । पश्चात्कोपयितु-मायुष्मन्तं तथा कृतवानस्मि । कुतः ।

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते जन्तुः ॥ ३१ ॥

**राजा ।** जनान्तिकम् । वयस्य । अनतिक्रमणीया दिवस्पतेराज्ञा । तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि –

---

२९.२-३ भोः । अहमनेनेष्टिपशुमारं मारितः । इममपि स्वागतेनाभिनन्दसि ।

त्वन्मतिः केवला तावत्प्रतिपालयतु प्रजाः ।
अधिज्यमिदमन्यास्मिन्कर्मणि व्यापृतं धनुः ॥ ३२ ॥

**विदूषकः** । जं भवं आणवेदि ।

**मातलिः** । इत आयुष्मान् ।

परिक्रम्य निष्क्रान्ताः सर्वे ।

॥ इति षष्ठोऽङ्कः ॥

---

३२·१ यद्भवानाज्ञापयति

# ॥ अथ सप्तमोऽङ्कः ॥

ततः प्रविशति नाकलासिका।

**नाकलासिका।** आणत्तं हि गुरुणा णारएण जहा—एदेसु य्येव दिअसेसु मच्चलोआदो उत्तिण्णेण राएसिणा दुस्सन्तेण भअवदो पुरंदरस्स पिअआरिणा दाणववहणिमित्तं गन्तव्वं। जाव अब्भच्चिअ इमं ह्यापुच्छिअमाणं णिक्खिवदि ताव एव्व मए विबुहपच्चक्खं मङ्गलणिमित्तं किंपि पेक्खणअं दरसइदव्वं। ता तुमं कंपि लासिअं अण्णेसिअ संगीदसालासु आअच्छ त्ति। ता जाव लासिअं अण्णेसामि। परिक्रम्यावलोक्य च। का उण एसा गहीदवरणेवच्छा हरिसुदुक्कण्ठिदाविअ इदो एव्वाअच्छदि। निपुणमवलोक्य। कहं। पिअसही चूदमञ्जरी। ता जाव एदाए सह उवज्झाअसमीवं गच्छामि। प्रतिपालयति।

ततः प्रविशति यथानिर्दिष्टा लासिका।

---

०·२-११ आज्ञप्तं हि गुरुणा नारदेन यथा—एतेष्वेव दिवसेषु मर्त्यलोकादुत्तीर्णेन राजर्षिणा दुःषन्तेन भगवतः पुरंदरस्य प्रियकारिणा दानववधनिमित्तं गन्तव्यम्। यावदभ्यर्च्येमं ह्यापृच्छयमानं निक्षिपति तावदेव मया विबुधप्रत्यक्षं मङ्गलनिमित्तं किमपि प्रेक्षणकं दर्शयितव्यम्। तत् त्वं कामपि लासिकामन्विष्य संगीतशालास्वागच्छेति। तद्यावल्लासिकामन्वेष्यामि। ........। का पुनरेषा गृहीतवरनेपथ्या हर्षितोत्कण्ठितेवेत एवागच्छति। ........। कथम्। प्रियसखी चूतमञ्जरी। तत्तावदेतया सहोपाध्यायसमीपं गच्छामि।

**चूतमञ्जरी ।** सविस्मयं सहर्षं च । **अहो महप्पभावो राएसी दुस्सन्तो ।** सासूयम् । **अहो महाबलो सो हदो दुज्जओ दाणवबलो ।** नृत्यति ।

**प्रथमा ।** उपसृत्य । **सहि चूदमञ्जरिए । उक्कण्ठिदा विअ लच्छीअसि ।**

**द्वितीया ।** विलोक्य । **कहं पारिजाअमञ्जरि । सहि । सव्वं कथयिस्सं । तुमं दाव कहिं पत्थिदेति पुच्छिस्सं ।**

**प्रथमा । सहि । संखेवेण कथयिस्सं । अहं खु राएसिणो दुस्सन्तस्स दाणवविजअववदेसेण अज्ज मङ्गलणिमित्तं किंपि पेक्खणअं दंसीअदुत्ति उवज्झाअस्स अञ्जाए उभे य्येव सआसं — — ।**

**द्वितीया ।** सोत्कण्ठम् । **आसी अवसरो एदस्स । दाणिं पुणो मच्चलोअं पत्थिदे एदस्सिं महाराए कस्स दंसीअदि ।**

**प्रथमा ।** साशङ्कम् । **सहि । किं महेन्दस्स मणोरहाणि संपादिअ गदो उद अण्णधा ।**

---

०·१३-१५ [........ ।] अहो महाप्रभावो राजर्षिर्दुःषन्तः । ........ । अहो महाबलः स हतो दुर्जयो दानवबलः ।

०·१६-१७ सखि चूतमञ्जरि । उत्कण्ठितेव लक्ष्यसे ।

०·१८-१९ कथं पारिजातमञ्जरी । सखि । सर्वं कथयिष्ये । त्वं तावत्कुत्र प्रस्थितेति पृच्छामि ।

०·२०-२२ सखि संक्षेपेण कथयिष्ये । अहं खलु राजर्षेर्दुष्यन्तस्य दानवविजयव्यपदेशेनाद्य मङ्गलनिमित्तं किमपि प्रेक्षणकं दर्श्यतामित्युपाध्यायस्याज्ञया उभे एव सकाशं — — ।

०·२३-२४ आसीदवसर एतस्य । इदानीं पुनर्मर्त्यलोकं प्रस्थित एतस्मिन्महाराजे कस्य दर्श्यते ।

०·२५-२६ सखि । किं महेन्द्रस्य मनोरथान्संपाद्य गत उतान्यथा ।

द्वितीया। सहि सुणु। अज्ज य्येव गोसग्गसमए णवरं दुज्जअदाणवजीविदसव्वस्ससेसं गिहितुण जावअ तिदसविलासिणीसरसहिअआइं अवणिं अहिप्पट्टिदो। अदोअ मे हरिसोक्कण्ठाणं कारणं।

प्रथमा। सहि। तए पिअं णिवेदिदं। जं एव्व उवज्झाएण पुरुवंसराएसिणो पुरदो कज्जं कादुं अण्णत्तं तं जेव्व गीदं कादुण एत्थ एव करेम्ह।

द्वितीया। जं दे रोअदि।

प्रथमा। ता जं य्येव गीदं मए लविदं – तए वा – सह णच्चेम्ह।

द्वितीया। सहि एव्वं करेम्ह। उभे गायतः।

अविसअगमणं कंचण अण्णं अ सराअमालि महुसमओ।
अण्णं कुणइ विसण्णं पाडीइमाणं भूमीए ॥ १ ॥

इत्युभे नर्तित्वा निष्क्रान्ते।

॥ प्रवेशकः ॥

---

०·२७-३० सखि श्रृणु। अद्यैव गोसर्गसमये, णवरं दुर्जयदानवजीवितसर्वस्वशेषं गृहीत्वा यावच्च त्रिदशविलासिनीसरसहृदयानि, अवनिमभिप्रस्थितः। अतश्च मे हर्षोत्कण्ठानां कारणम्।

०·३१-३३ सखि। त्वया प्रियं निवेदितम्। यदेवोपाध्यायेन पुरुवंशराजर्षिणः पुरतः कार्यं कर्तुमाज्ञप्तं तदेव गीतं कृत्वा इहैव कुर्मः।

०·३४ यत्ते रोचते।

०·३५ तद्यदेव गीतं मयालापितं, त्वया वा, सह नृत्यावः।

०·३६ सखि एवं कुर्वः।

१ अविषयगमनं कंचन अन्यं च सरागमालि मधुसमये।
अन्यं करोति विसज्ञं पात्यमानं भूम्याम् ॥ १ ॥

ततः प्रविशति रथयानेन रथाधिरूढो राजा दुःषन्तो मातलिश्च ।

३ राजा । मातले । अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये ।

मातलिः । उभयमप्यपरितोषम् । कुतः

प्रथमोपकृतं मरुत्वतः
प्रतिपत्त्या लघु मन्यते भवान् ।
गणयत्यवदानविस्मितो
भवतः सोऽपि न सत्क्रियागुणान् ॥ २ ॥

राजा । मा मैवम् । स खलु मनोरथानामप्यभूमिर्विसर्जनावसरे सत्कारः । मम हि दिवौकसां समक्षमर्धासनोपविष्टस्य

अन्तर्गतप्रार्थनमन्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन ।
आमृष्टवक्षोहरिचन्दनाङ्का
मन्दारमाला हरिणा पिनद्धा ॥ ३ ॥

मातलिः । किमिव नामायुष्मानमरेश्वरान्नार्हति । पश्य ।

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुनानतपर्वभिः
पुरुषकेसरिणश्च पुरा नखैः ॥ ४ ॥

राजा । अत्र खलु शतक्रतोरेव महिमा ।

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।

किं वाभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ५ ॥

मातलिः । सदृशं तवैतत् । स्तोकमन्तरमतीत्य । आयुष्मन् । इतः पश्य नाकपृष्ठप्रतिष्ठितं सौभाग्यमात्मयशसः ।

विच्छित्तिशेषैः सुरसुन्दरीणां
वर्णैरमी कल्पलतान्तरेषु ।
संचित्य गीतक्षममर्थतत्त्वं
दिवौकसस्त्वच्चरितं लिखन्ति ॥ ६ ॥

राजा । मातले । असुरसंप्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता मया न लक्षितः स्वर्गमार्गः । कतमस्मिन्पथि मरुतां वर्तामहे ।

मातलिः । त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तरश्मिः ।
तस्य व्यपेतरजसः प्रवहस्य वायो-
र्मार्गो द्वितीयहरिविक्रमपूत एषः ॥ ७ ॥

राजा । मातले । अतः खलु सबाह्यान्तःकरणो ममान्तरात्मा प्रसीदति । रथाङ्गमवलोक्य । शङ्के मेघपदवीमवतीर्णौ स्वः ।

३ मातलिः । सस्मितम् । कथमवगम्यते ।

राजा । अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
र्हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ ८ ॥

मातलिः । क्षणादूर्ध्वमायुष्मानात्माधिकारभूमौ वर्तिष्यते ।

राजा । अधोऽवलोक्य । मातले । वेगावतरणादाश्चर्यदर्शनः संप-
३ द्यते मनुष्यलोकः । तथा हि ।

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात्पादपाः ।
संधानं तनुभावनष्टसलिलव्यक्त्या व्रजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥ ९ ॥

मातलिः । साधु दृष्टम् । सबहुमानमवलोक्य । अहो उदग्ररमणीया पृथिवी ।

राजा । मातले । कतमोऽयं पूर्वापरसमुद्रावगाढः कनकनिष्यन्दशोभी सान्ध्य इव मेघपरिघः सानुमानालोक्यते ।

मातलिः । आयुष्मन् । एष खलु हेमकूटो नाम किंपुरुषपर्वतः परं तपस्विनां सिद्धिक्षेत्रम् । पश्य –

स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽस्मिन्सपत्नीकस्तपस्यति ॥ १० ॥

राजा । सादरम् । तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ।

मातलिः । प्रथमः कल्पः । अवतरणं नाटयित्वा । एतावक्तीर्णौ स्वः ।

राजा । सविस्मयम् । मातले ।

उपोढशब्दा न रथाङ्गनेमयः
प्रवर्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतया निरुद्धति-
स्तवावतीर्णोऽपि रथो न लक्ष्यते ॥ ११ ॥

मातलिः । एतावानेव शतमन्योरायुष्मतश्च विशेषः ।

राजा । मातले । कतमस्मिन्प्रदेशे मारीचाश्रमः ।

मातलिः । हस्तेन दर्शयन् ।

वल्मीकार्धनिमग्नमूर्तिरुरगत्वग्बद्धसूत्रान्तरः
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः ।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥१२॥

राजा । नमोऽस्मै कष्टतपसे ।

मातलिः । संयतप्रग्रहं कृत्वा । एतावदितिपरिवर्धितमन्दारवृक्षकं प्रजापतेस्तपोवनं प्रविष्टौ स्वः ।

राजा । अहो स्वर्गादधिकं निर्वृतिस्थानम् । अमृतह्रदमिवावगाढोऽस्मि ।

मातलिः । रथं स्थापयित्वा । अवतरत्वायुष्मान् ।

राजा । साभिनयमवतीर्य । भवान्कथमिदानीम् ।

मातलिः । समयान्त्रितोऽयमास्ते रथः । वयमप्यवतरामः । तथा कृत्वा । इत इत आयुष्मान् । दृश्यन्तामत्रभवतां सिद्धर्षीणां तपोवनभूमयः ।

राजा । ननु विस्मयादुभयमप्यवलोकयामि ।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये हैमसहस्रपत्रसुभगे नक्तंदिवं सद्व्रतम् ।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसंनिधौ संयमो
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिस्तपस्यन्त्यमी ॥१३॥

मातलिः । उत्कर्षिणी खलु महतां प्रार्थना ।

उभौ परिक्रामतः ।

मातलिः । आकाशे । अये वृद्धशाकल्य । किमनुतिष्ठति भगवान्मारीचः । कर्णं दत्त्वा । किं ब्रवीषि । एष दाक्षायण्या पतिव्रताधर्ममधिकृत्य पृष्टस्तस्यै महर्षिपत्नीसहितायै कथयतीति । राजा-

नमवलोक्य । प्रतिपाल्यावसरः खलु प्रस्तावः । अस्यामशोकवृक्षच्छायायां तावदायुष्मानास्तां यावत्त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामि ।

राजा । यथा भवान्मन्यते ।

निष्क्रान्तो मातलिः ।

राजा । निमित्तं सूचयित्वा ।

मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥ १४ ॥

नेपथ्ये । मा क्खु मा क्खु चापलं करेहि । सिक्ख । कधं कधं येव्व अत्तणो पकिदिं दंसेसि ।

राजा । कर्णं दत्त्वा । अभूमिरियमविनयस्य । को नु खल्वेष निषिध्यते । शब्दानुसारेणावलोक्य । सविस्मयम् । अये । अयमनुरुध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः —

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
आक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ १५ ॥

ततः प्रविशति यथानिर्दिष्टकर्मा सह तपस्विनीभ्यां बालः ।

बालः । जिम्भ जिम्भ ले सिंघ । दन्ताइं दे गणइस्सं ।

प्रथमा । अविणीद । किं णो अवच्चणिव्विसेसाइं सत्ताइं विप्प-

---

१४.१-२ मा खलु मा खलु चापलं कुरु । शिक्षस्व । कथं कथमेवात्मनः प्रकृतिं दर्शयसि ।

१५.२ जृम्भस्व जृम्भस्व रे सिंह । दन्तांस्ते गणयिष्ये ।

१५.३-५ अविनीत । किं नः अपत्यनिर्विशेषाणि सत्त्वानि विप्र-

करेसि । हन्त । वड्ढइ दे संरम्भो । ठाणे क्खु इसिजणेण सव्वदमणो त्ति किदणामधेओसि ।

६ राजा । किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः । विचिन्त्य । नूनमनपत्यता मां वत्सलयति ।

द्वितीया । एसा केसरिणी तुमं लङ्घेदि जदि से पुत्तअं ण

९ मुञ्चसि ।

बालः । सस्मितम् । अम्महे । बलीअं खु भीदो म्हि । अधरं दर्शयति ।

राजा । महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधोपेक्ष इव स्थितः ॥ १६ ॥

प्रथमा । वच्छ । मुञ्च एदं बालमिइन्दअं । अवरं दे कीलणअं दाइस्सं ।

३ बालः । कहिं सो । देहि मे एणं । इति दक्षिणहस्तं प्रसारयति ।

राजा । हस्तं विलोक्य । कथं चक्रवर्तिलक्षणमप्यनेन धार्यते । तथा ह्यस्य –

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।

---

करोषि । हन्त । वर्धते ते संरम्भः । स्थाने खल्वृषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।

१५·८-९ एषा केसरिणी त्वां लङ्घयति यदि तस्याः पुत्रकं न मुञ्चसि ।

१५·१० अहो । बलीयः खलु भीतोऽस्मि ।

१६·१-२ वत्स । मुञ्चैनं बालमृगेन्द्रम् । अपरं ते क्रीडनकं दास्यामि ।

१६·३ कुत्र सः । देहि मे एनम् ।

अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥ १७ ॥

द्वितीया । सुव्वदे । ण सक्को एसो वाआमेत्तेण विरमायिदुं । ता गच्छ । ममकेरए उडए मक्कण्डेअस्स इसिकुमारअस्स वण्णचित्तिदो मट्टिकामोरो चिट्ठदि । तं से उवहर ।

प्रथमा । तह । निष्क्रान्ता ।

बालः । दाव इमिणा ज्जेव कीलयिस्सं । तापसीं विलोक्य हसति ।

राजा । स्पृहयामि खलु दुर्ललितकायास्मै । निःश्वस्य ।

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १८ ॥

तापसी । साङ्गुलितर्जनम् । भोदु । ण मं गणेसि । पार्श्वमवलोक्य । को एत्थ इसिकुमारआणं । राजानं दृष्ट्वा । भद्दमुह । एहि दाव । मोएहि इमिणा दुम्मोअहत्थग्गहेण डिम्भएण बाधीअमाणं बालमइन्दअम् ।

---

१७.१-३ सुव्रते । न शक्य एष वाङ्मात्रेण विरमयितुम् । तद्गच्छ । मदीयके उटजे मार्कण्डेयस्य ऋषिकुमारकस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति । तमस्योपहर ।

१७.४ तथा ।　　　१७.५ तावदनेनैव क्रीडिष्यामि ।

१८.१-४ ..... । भवतु । न मां गणयसि । ..... । क इह ऋषिकुमारकाणाम् । ...... । भद्रमुख । एहि तावत् । मोचयानेन दुर्मोकहस्तग्रहेण डिम्भकेन बाध्यमानं बालमृगेन्द्रकम् ।

**राजा।** तथा। उपगम्य। अयि महर्षिपुत्र।

एवमाश्रमविरुद्धवृत्तिना  
संयमः किमिति जन्मतस्त्वया।  
सत्त्वसंश्रयसुखोऽपि दूष्यते  
कृष्णसर्पशिशुनेव चन्दनः॥ १९॥

**तापसी।** भद्दमुह। ण क्खु अअं इसिकुमारओ।

**राजा।** आकारसदृशं चेष्टितमेवास्य कथयति। स्थानप्रत्ययात्तु वयमेवंतर्किणः। यथाभ्यर्थितमनुतिष्ठन् बालस्य स्पर्शमनुभूयात्मगतम्।

अनेन कस्यापि कुलाङ्कुरेण  
स्पृष्टस्य गात्रेषु सुखं ममेदम्।  
कां निर्वृतिं चेतसि तस्य कुर्या-  
द्यस्यायमङ्कात्कृतिनः प्ररूढः॥ २०॥

**तापसी।** उभाववलोक्य। अच्छरिअं अच्छरिअं।

**राजा।** किमिव।

**तापसी।** इमस्स बालअस्स असंबद्धेवि भद्दमुहे संवादिणी आकिदित्ति विम्हाविदम्हि। अपरिइदस्स वि दे अप्पडिलोमो संवुत्तो त्ति।

**राजा।** बालमुपलालयन्। आर्ये। न चेन्मुनिकुमारोऽयमथ कोऽस्य व्यपदेशः।

---

१९·१ भद्रमुख। न खल्वयमृषिकुमारकः।

२०·१ आश्चर्यमाश्चर्यम्।

२०·३-५ अस्य बालकस्य असंबद्धेऽपि भद्रमुखे संवादिन्याकृतिरिति विस्मापितास्मि। अपरिचितस्यापि तेऽप्रतिलोमः संवृत्त इति।

**तापसी ।** पुरुवंसो ।

**राजा ।** आत्मगतम् । कथमेकान्वयो मम । अतः खलु मदनुकारिणमेनमत्रभवती मन्यते । अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम् ।

भवनेषु सुधासितेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकयतिव्रतानि पश्चा-
त्तरुमूलानि गृहीभवन्ति तेषाम् ॥ २१ ॥

प्रकाशम् । न पुनरात्मगत्या मानुषाणामेष विषयः ।

**तापसी ।** जह भद्दमुहो भणादि । अच्छरासंबन्धेण इमस्स बालस्य जणणी एत्थ देवगुरुणो तपोवणे पसूदा ।

**राजा ।** आत्मगतम् । हन्त । द्वितीयमिदमाशाजननम् । प्रकाशम् । सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ।

**तापसी ।** को तस्स धम्मदारपरिच्चाइणो णामधेअं कित्तइस्सदि ।

**राजा ।** स्वगतम् । इयं खलु कथा मामेव लक्ष्यीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि । अथ वा । अन्याय्यः परदारव्यवहारः ।

प्रविश्य मृण्मयमयूरहस्ता **द्वितीया तापसी ।** सव्वदमण । सउन्दलावण्णं पेक्ख ।

---

२०·८ पुरुवंशः ।

२१·२-३ यथा भद्रमुखो भणति । अप्सरःसंबन्धेनास्य बालस्य जनन्यत्र देवगुरोस्तपोवने प्रसूता ।

२१·६ कस्तस्य धर्मदारपरित्यागिनो नामधेयं कीर्तयिष्यति ।

२१·१०-११ सर्वदमन । शकुन्तलावण्यं[वर्णं] प्रेक्षस्व ।

**बालः ।** सदृष्टिक्षेपम् । **कहिं मे अज्जू ।**

उभे प्रहसतः ।

**प्रथमा । णामसादिस्सेण वञ्चिदो माउवच्छलो ।**

**द्वितीया । वच्छ । इमस्स मित्तिआमोरस्स रमणीअदं पेक्ख त्ति भणिदो सि ।**

**राजा ।** स्वगतम् । **किं वा शकुन्तलेत्यस्य मातुराख्या । सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नामधेयप्रस्तावो मे विषादाय कल्पेत ।**

**बालः । अत्तिए । लोअदि मे भद्दालके एशे मऊले ।** क्रीडनकमादत्ते ।

**द्वितीया ।** आलोक्य । ससंभ्रमम् । **अम्मो । रक्खागण्डओ से मणिबन्धे ण दीसदि ।**

**राजा । अलमावेगेन । नन्वयमस्य सिंहशावकविमर्दात्परिभ्रष्टः ।** आदातुमिच्छति ।

**उभे । माक्खु । माक्खु एदं अवलम्बिअ । कधं गिहीदं जेव्व णेण ।** सविस्मयमुरोनिहितहस्ते परस्परमवलोकयतः ।

---

२१·१२ कुत्र मे माता ।

२१·१४ नामसादृश्येन वञ्चितो मातृवत्सलः ।

२१·१५-१६ वत्स । अस्य मृत्तिकामयूरस्य रमणीयतां प्रेक्षस्व इति भणितोऽसि ।

२१·२०-२१ अत्तिके । रोचते मे भद्रालक एष मयूरः ।

२१·२२-२३ अम्मो । रक्षागण्डकोऽस्य मणिबन्धे न दृश्यते ।

२१·२६-२७ मा खलु । मा खलु एतमवलम्ब्य । कथम् । गृहीतमेवानेन ।

राजा । किमर्थं प्रतिषिद्धोऽस्मि ।

प्रथमा । सुणादु महाभाओ । महाप्पभावा एसा खु अवराइदा णाम महोसधी इमस्स दारअस्स जादकम्मसमए भअवदा मारीएण दिण्णा । एदं किल मादापिदरे अत्ताणअं वा वज्जिअ अवरो भूमिपडिदं ण गेह्णदि ।

राजा । अथ गृह्णाति ।

प्रथमा । तदा तं सप्पो भविअ दंसदि ।

राजा । अथ भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ।

उभे । अणेकसो ।

राजा । सहर्षम् । तत्किं खल्विदानीं पूर्णमपि मनोरथं नाभिनन्दामि । बालं परिष्वजते ।

द्वितीया । सुव्वदे । एहि । इमं वुत्तन्तं णिअमव्वावुदाए सउन्दलाए णिवेदेम्ह ।

निष्क्रान्ते तापस्यौ ।

बालः । मुञ्च मं जाव अज्जूए सआस गमिस्स ।

---

२१·२९-३२ श्रृणोतु महाभागः । महाप्रभावैषा खल्वपराजिता नाम महौषधिरस्य दारकस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां किल मातापितरावात्मानं वा वर्जित्वापरो भूमिपतितां न गृह्णाति ।

२१·३४ तदा तं सर्पो भूत्वा दशति । २१·३६ अनेकशः ।

२१·३९-४० सुव्रते । एहि । इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः ।

२१·४२ मुञ्च मां यावदम्बायाः सकाशं गमिष्यामि ।

**राजा।** पुत्रक। मया सहैव मातरमभिनन्दिष्यसि।

**बालः।** मम क्खु तादो दुस्सन्तो। ण तुमम्।

४५ **राजा।** सस्मितम्। एष विवाद एव प्रत्याययति।

ततः प्रविशत्येकवेणीधरा शकुन्तला।

**शकुन्तला।** विआरकाले वि पकिदित्थं सव्वदमणस्स ओसहिं
४८ सुणिअ ण मे आसा आसी अत्तणो भाअहेएसु। अथ वा जधा मे
साणुमतीए आचक्खिदं तधा संभावीअदि एदं।

**राजा।** शकुन्तलां दृष्ट्वा। अये। इयमत्रभवती शकुन्तला।

वसने परिधूसरे वसाना
नियमक्षाममुखी धृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला
मम दीर्घं विरहव्रतं बिभर्ति ॥ २२ ॥

**शकुन्तला।** पश्चात्तापविवर्णं राजानं दृष्ट्वा। ण क्खु अज्जउत्तो
विअ। ता को णु क्खु एसो किदरक्खामङ्गलं दारअं गत्त-
३ संसग्गेण दूसेदि।

**बालः।** मातरमुपेत्य। अज्जुए। एशे केवि पलकेलिए मं पुत्तकेत्ति
आलबति।

---

२१·४४ मम खलु तातो दुःषन्तः। न त्वम्।

२१·४७-४९ विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न मे आशासीदात्मनो भागधेयेषु। अथ वा यथा मे सानुमत्याख्यातं तथा संभाव्यत एतत्।

२२·१-३ न खल्वार्यपुत्र इव। तत्को नु खल्वेष कृतरक्षामङ्गलं दारकं गात्रसंसर्गेण दूषयति।

२२·४-५ अज्जुके। एष कोऽपि परकीयो मां पुत्रक इत्यालपति।

**राजा ।** प्रिये । क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तं यतोऽहमिदानीं त्वया प्रत्यभिज्ञातमात्मानमिच्छामि ।

**शाकुन्तला ।** आत्मगतम् । हिअअ । समस्सस समस्सस । परिचत्तमच्छरेण अणुकम्पिदम्हि देव्वेण । सहर्षम् । अज्जउत्तो क्खु एसो ।

**राजा ।**

स्मृतिभिन्नमोहतमसो दिष्टया प्रमुखे स्थितासि मे सुमुखि ।
उपरागान्ते शशिनः समुपगता रोहिणी योगम् ॥ २३ ॥

**शाकुन्तला ।** जअदु जअ– – – – – । इत्यर्धोक्ते बाष्पकण्ठी विरमति ।

**राजा ।** प्रिये ।

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ २४ ॥

**बालः ।** अज्जुए । को एसो ।

**शाकुन्तला ।** वच्छ । दे भाअधेआणि पुच्छ । इति रोदिति ।

**राजा ।** सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।

---

२२·८-१० हृदय । समाश्वसिहि समाश्वसिहि । परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन । .... । आर्यपुत्रः खल्वेषः ।

२३·१ जयतु जय– ।

२४·१ अज्जुए । क एषः ।

२४·२ वत्स । ते भागधेयानि पृच्छ ।

प्रबलतमसामेवंप्राया: शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ।। २५ ।।

इति पादयोः पतति ।

**शकुन्तला ।** उट्ठेदु अज्जउत्तो । णूणं मे सुअरिदप्पडिबन्धअं पुराकिदं तेसु दिअसेसु परिणामाहिमुहं आसि जेण साणुक्कोसो वि अज्जउत्तो मइ तधाविहो संवुत्तो ।

**राजा ।** उत्तिष्ठति ।

**शकुन्तला ।** अध कधं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो ।

**राजा ।** उद्धृतविषादशल्यः कथयामि ।

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो बाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
बाष्पं प्रमृज्य विगतानुशयो भवामि ।। २६ ।।

यथोक्तमनुतिष्ठति ।

**शकुन्तला ।** प्रमृष्टबाष्पा नाममुद्रां दृष्ट्वा । ण णु तं अङ्गुलीअकं जं तदा पच्चक्खीकरणे अज्जउत्तस्स दुल्लभं आसी ।

**राजा ।** अथ किम् । अस्मादद्भुतोपलम्भान्मया स्मृतिरुपलब्धा ।

---

२५.२-४ उत्तिष्ठत्वार्यपुत्रः । नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामाभिमुखमासीद्येन सानुक्रोशोऽप्यार्यपुत्रो मयि तथाविधः संवृत्तः ।

२५.६-७ अथ कथमार्यपुत्रेण स्मृतो दुःखभागी अयं जनः ।

२६.२-३ न नु तदङ्गुलीयकं यत्तदा प्रत्यक्षीकरण आर्यपुत्रस्य दुर्लभमासीत् ।

**शकुन्तला ।** विसमं किदं णेण जं तदा अज्जउत्तस्स पच्चअकरणे दुल्लहं मे आसी ।

**राजा ।** तेन हि ऋतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमम् ।

**शकुन्तला ।** ण से विस्ससामि । अज्जउत्तो ज्जेव णं धारेदु ।

प्रविश्य **मातलिः ।** दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान्वर्धते ।

**राजा ।** सुहृत्संपादितत्वात्साधुतरफलो मे मनोरथः । मातले । न खलु विदितोऽयमाखण्डलस्यार्थः ।

**मातलिः ।** सस्मितम् । किमीश्वराणामपरोक्षम् । एहि । भगवान्मारीचस्ते दर्शनं वितरति ।

**राजा ।** शकुन्तले । अवलम्ब्यतां पुत्रः । त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

**शकुन्तला ।** हिरिआमि अज्जउत्तेण सह गुरुसमीवं गन्तुं ।

**राजा ।** अयि । आचरितव्यमेतदभ्युदयकालेषु ।

सर्वे परिक्रामन्ति ।

ततः प्रविशत्यदित्या सार्धमर्धासनस्थो मारीचः ।

**मारीचः ।** राजानमवलोक्य । दाक्षायणि ।

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुःषन्त इत्यभिहितो भुवनस्य भर्ता ।

---

२६.५-६　विषमं कृतमनेन यत्तदा आर्यपुत्रस्य प्रत्ययकरणे दुर्लभं मे आसीत् ।
२६.८　नास्य विश्वसिमि । आर्यपुत्र एवैनद्धारयतु ।
२६.१७　जिह्रेम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम् ।

चापेन यस्य विनिवर्तितकर्म जातं
तत्कोटिमत्कुलिशमाभरणं मघोनः ॥ २७ ॥

**अदितिः।** संभावणीआणुभावा खु से आकिदी।

**मातलिः।** भूतलपते। एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः। तदुपसर्प।

**राजा।** मातले।

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम्।
यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वंद्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम् ॥ २८ ॥

**मातलिः।** अथ किम्।

**राजा।** प्रणिपत्य। उभावपि वां वासवनियोज्यो दुःषन्तः प्रणिपतति।

**मारीचः।** वत्स। चिरं पृथिवीं पालय।

**अदितिः।** अप्पडिरधो होहि।

**शकुन्तला।** दारएण सहिदा पादवन्दणं करेमि। तथा करोति।

**मारीचः।** वत्से।

आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः।
आशीरन्या न ते योग्या पौलोमीसदृशी भव ॥ २९ ॥

---

२७.१ संभावनीयानुभावा खल्वस्याकृतिः।

२८.५ अप्रतिरथो भव।

२८.६ दारकेण सहिता पादवन्दनं करोमि।

**अदितिः ।** जादे । भत्तुणो बहुमदा होहि । अअं च दीहाऊ वच्छओ उहअकुलणन्दणो होदु । ता उपविसध ।

सर्वे प्रजापतिमभित उपविशन्ति ।

**मारीचः ।** एकैकं निर्दिशन् ।

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम् ॥ ३० ॥

**राजा ।** भगवन् । प्रागभिप्रेतसिद्धिः पश्चाद्दर्शनमित्यपूर्वो भगवतोऽनुग्रहः । पश्यतु भगवान् ।

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु संपदः ॥ ३१ ॥

**मातलिः ।** एवं विधातारः प्रसीदन्ति ।

**राजा ।** भगवन्निमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिनोपयम्य कस्यचित्कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात्प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतः कण्वस्य । पश्चादिमामङ्गुलीयकदर्शनादारूढस्मृतिरूढपूर्वामनुगतोऽस्मि । तच्चित्रमेव मे प्रतिभाति ।

यथा गजो नेति समक्षरूपे
तस्मिन्नपक्रामति संशयः स्यात् ।
पदानि दृष्ट्वा तु भवेत्प्रतीति-
स्तथाविधो मे मनसो विकारः ॥ ३२ ॥

---

२९.१-२ जाते । भर्तुर्बहुमता भव । अयं च दीर्घायुर्वत्सक उभयकुलनन्दनो भवतु । तदुपविशत ।

**मारीचः** । वत्स । अलमात्मापचारशङ्कया । संमोहोऽपि त्वय्युपपन्नः । श्रूयताम् ।

**राजा** । अवहितोऽस्मि ।

**मारीचः** । यदैवाप्सरस्तीर्थात्प्रत्यक्षवैक्लव्यां शकुन्तलामादाय मेनका दाक्षायणीसकाशमागता तदैव ध्यानादधिगतोऽस्मि दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा नान्यथेति । स चायमङ्गुलीयकदर्शनावसानः ।

**राजा** । सोच्छ्वासम् । एषोऽहं वचनीयान्मुक्तोऽस्मि ।

**शकुन्तला** । आत्मगतम् । दिट्ठिआ अकारणपच्चादेशी ण अज्जउत्तो । ण हु सत्तं अत्ताणअं सुमरेमि । अह वा ण सुतो धुव्वं अण्णहिअआए मए स सावो जदो सहीहिं अच्चादरेण संदिट्ठाम्हि भत्तुणो अङ्गुलीअअं दंसेहित्ति ।

**मारीचः** । वत्से । विदितार्थासि । तदिदानीं सहधर्मचारिणं प्रति न त्वया मन्युः कार्यः । पश्य ।

शापादसि प्रतिहता स्मृतिलोपरूक्षे
भर्तर्यपेततमसि प्रभुता तवैव ।
छाया न मूर्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥ ३३ ॥

**राजा** । यथा भगवानाह ।

**मारीचः** । वत्स । कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठितजातकर्मा पुत्र एष शाकुन्तलेयः ।

---

३२.९-१२ दिष्ट्या अकारणप्रत्यादेशी नार्यपुत्रः । न खलु शप्तमात्मानं स्मरामि । अथ वा न श्रुतो ध्रुवमन्यहृदयया मया स शापो यतः सखीभिरत्यादरेण संदिष्टास्मि भर्तुरङ्गुलीयकं दर्शयेति ।

राजा । भगवन् । अत्र खलु मे वंशप्रतिष्ठा ।

मारीचः । तथा तत् । भाविनं चक्रवर्तिनमेनमवगच्छत्वायुष्मान् । पश्य ।

रथेनानुद्धातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।
इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥ ३४ ॥

राजा । भगवता कृतसंस्कारे सर्वमस्मिन्नाशंसामहे ।

अदितिः । भगवं । इमाए दुहिदुमणोरहसंपत्तीए कण्णो वि दाव सुदवित्थारो करीअदु । दुहिदुवच्छला मेणआ इध्वज्जेव संणिहिदा ।

शकुन्तला । स्वगतम् । मणोगतं मे मन्तिदं भअवदीए ।

मारीचः । तपःप्रभावात्प्रत्यक्षं सर्वमेतत्तत्रभवतः कण्वस्य ।

राजा । अतः खलु ममानतिक्रुद्धो मुनिः ।

मारीचः । तथाप्यसौ प्रियमस्माभिः श्रावयितव्यः । कः कोऽत्र भोः ।

प्रविश्य शिष्यः । भगवन् । अयमस्मि ।

मारीचः । वत्स गालव । इदानीमेव विहायसा गत्वा तत्रभवते कण्वाय प्रियमावेदय यथा पुत्रवती शकुन्तला दुर्वाससः शापविनिवृत्तौ स्मृतिमता दुःषन्तेन प्रतिगृहीता – इति ।

शिष्यः । यदाज्ञापयति भगवान् । प्रणम्य निष्क्रान्तः ।

---

३४.२-४ भगवन् । अनया दुहितृमनोरथसंपत्त्या कण्वोऽपि तावच्छ्रुतविस्तारः क्रियताम् । दुहितृवत्सला मेनकेहैव संनिहिता ।

३४.५ मनोगतं मे मन्त्रितं भगवत्या ।

१५ **मारीचः।** राजानं प्रति । वत्स । त्वमपि सापत्यदारः सख्युराखण्डलस्य रथमारुह्य स्वां राजधानीं प्रतिष्ठस्व ।

**राजा।** यदाज्ञापयति भगवान् ।

**मारीचः।** क्रतुभिरुचितभागांस्त्वं सुरान्भावयालं
सुरपतिरपि वृष्टीस्त्वत्प्रजार्थं विधत्ताम् ।
इति समयुपकारव्यञ्जितश्रीमहिम्नो-
र्व्रजतु बहुतिथो वां सौहृदेनैव कालः ॥ ३५ ॥

**राजा।** भगवन्यथाशक्ति श्रेयसे यतिष्ये ।

**मारीचः।** वत्स । किं ते भूयः प्रियमुपहरामि ।

२ **राजा।** सहर्षं प्रणमन् । यदतः परं मे भगवान्प्रसादं कर्तुमिच्छति तदिदमस्तु —

प्रवर्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहतां महीयताम् ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥ ३६ ॥

इति निष्क्रान्ताः सर्वे ।

॥ इति सप्तमोऽङ्कः ॥

इति महाकविश्रीकालिदासविरचितम्
**अभिज्ञानशाकुन्तलं नाम नाटकं समाप्तम्**

---

## Verse-Index*



* Compiled by Sri M. Ramakrishna Sastri, M.A., Sanskrit Dept., University of Madras.

# Sanskrit Publications of Sahitya Akademi

## CRITICAL EDITIONS OF KALIDASA'S WORKS

MEGHADUTA
edited by S. K. De
pp. 32 + xxxviii + 115
Cloth Rs. 5 Ordinary Rs. 2.50

VIKRAMORVASIYA
edited by H. D. Velankar
pp. 8 + lxxxviii + 148
Cloth Rs. 8 Ordinary Rs. 6

KUMARASAMBHAVA
edited by Suryakanta
pp. 10 + xxxiv + 254
Cloth Rs. 12.50 Ordinary Rs. 10

*Each volume carries a General Introduction on Kalidasa's works by Dr. S. Radhakrishnan.*

## SAHITYA RATNAKOSHA
(Anthology of Sanskrit Literature)

PURANETIHASA SANGRAHA
(Selections from Epics & Puranas)
edited by S. K. De & R. C. Hazra
pp. xvi + 354
Cloth Rs. 10 Ordinary Rs. 7.50

BAUDDHA SANGRAHA
(Selections from Buddhist Texts)
edited by Nalinaksha Dutt
pp. xxviii + 114
Cloth Rs. 10 Ordinary Rs. 7.50

ABHILEKHA SANGRAHA
(Selections from Inscriptions)
edited by Bahadur Chand Chhabra
pp. xxiv + 104
Cloth Rs. 8.50 Ordinary Rs. 7.50

## OTHERS

ASOKAVADANA
edited by Sujitkumar Mukhopadhyaya
pp. lxxv + 183
Cloth Rs. 18

*Copies available at :*

SAHITYA AKADEMI
Rabindra Bhavan, New Delhi-1